# (Video) Kalidasa's Raghuvamsam – First Sarga – Vidhya Ramesh

**रघुवंशमहाकाव्यम् – प्रथमः सर्गः – श्रीमती. विद्या रमेशः – संस्कृतभारती, चेन्नै**

(Raghuvamsa Maha Kavyam – First Sarga – Online weekly classes being conducted by Smt. Vidhya Ramesh, Samskrita Bharati, Chennai).

https://nivedita2015.wordpress.com/sanskrit-sessions/video-kalidasas-raghuvamsam-first-sarga-vidhya-ramesh/ This page contains the detailed notes of the shlokas covered in the sessions.

Link to the book – Raghuvamsa of Kalidasa with the commentary (The Sanjivini) of Mallinatha – Moreshwar Ramachandra Kale – 1922 https://archive.org/details/raghuvamsaofkali00kliduoft

More references are given at the end.

**कविपरिचयः**

- **महाकविकालिदासस्य कृतयः**
  - **महाकाव्ये**
    - रघुवंशम् – रघूणाम् अन्वयः / वंशपरम्परा ।
    - कुमारसम्भवम् – पार्वतीशिवयोः कथा, कुमारस्य जननञ्च ।
  - **नाटकानि**

- अभिज्ञानशाकुन्तलम् – शकुन्तलादुष्यन्तयोः कथा, भरतस्य च वर्णनम्
- मालविकाग्निमित्रम् – राजा अग्निमित्रः, विवासातियाः (देशात् बहिः प्रेषितायाः) दास्याः च कथा
- विक्रमोर्वशीयम् – भूलोकस्य राजा पुरूरवाः, स्वर्लोकस्य ऊर्वशी

- **खण्डकाव्यम्**
  - मेघदूतम् – यक्षस्य कथा ।
- **मुक्तककाव्यम्**
  - ऋतुसंहारम् – षण्णाम् ऋतूनां वर्णनम्
- **कालः**
  - महाकविकालिदासः कस्यामपि कृतौ स्वस्य उल्लेखं नाकरोत् इत्यतः कालिदासस्य कालविषये भ्रमः ।
  - क्री. षष्ठशताब्द्याम् (BC) यशोधर्मा – विदुषां मतं भिन्नं – ते विक्रमादित्यस्य आश्रये आसीत् इति मन्यन्ते ।
  - क्री. चतुर्थ/पञ्चमशताब्द्याम् (BC) चन्द्रगुप्तसाम्राज्ये (स्वर्णकालः)
  - क्री. प्रथमशताब्द्याम् (BC) – विक्रमादित्यस्य काले इति अनेकेषां मतम् ।
- **मूलस्थानम्**
  - काश्मीरम्, वङ्गदेशः, विदर्भदेशः हिमालयः इति अत्रापि भिन्नाभिप्रायः ।
  - उज्जयिनी स्यात् यतः स्वकृतीषु कविवरः शिप्रानद्याः, महाकालस्य, उज्जयिन्याः च विशदवर्णनं चकार इति केषाञ्चन विदुषां मतम् ।
- **महाकाव्यस्य लक्षणम् ।**

- **कथावस्तु**
  - ऐतिहासिकम् / पौराणिकं स्यात्
- **विशद-वर्णनं स्यात्**
  - एतेषाम् अंशानाम् – प्राकृतिक-सामाजिक-कौटुम्बिक-प्रशासनिक-मनोवैज्ञानिकेति समाजस्य सर्वे आयामाः (dimensions) वर्णने स्थानं प्राप्नुयुः येन तत्काव्यं तदानीन्तन-जीवनं प्रतिबिम्बयेत् ।
- **विन्यासः / व्यवस्था।**
  - कथायाः मुख्यपात्राणां च क्रमिकविकासः ।
  - पात्राणां घटनानां च औचित्यता स्यात् ।
- **नायकः**
  - देवतासदृशः धीरोद्दात्तः नायकः – महासत्त्वः, गम्भीरः, क्षमावान्, अविकत्थनः, स्थिरचरित्रः, दृढव्रतः, स्वाभिमानी ।
  - (नरः चेत्) राजा, विशिष्टः व्यक्तिः, मुनिः ..
- **रसः**
  - शृङ्गारहास्यकरुणा रौद्रवीरभयानकाः । बीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः ॥ ६.१६ – नाट्यशास्त्रम्, भरतमुनिः
  - शान्तो नवमो रसः
  - महाकाव्ये अङ्गी रसः – शृङ्गार-वीर-करुण-शान्तः (एषु अन्यतमः)
  - अङ्गानि –इतररसाः
- **फलम्**
  - पुरुषर्थसिद्धये । धर्माविरोधता ; सत्योन्मुखता ; सद्वृत्तिः ।
- **गात्रं शैली च**
  - अष्टाधिकाः सर्गाः ।

- एकस्मिन् सर्गे एकस्य छन्दसः प्रयोगः ।
  - सर्गान्ते छन्दसः परिवर्तनम् – प्रायः सर्गस्य अन्तिमः श्लोकः भिन्नछन्दसा भवति – एतत् विषयपरिवर्तनसूचकं भवति ।

**सारः** – **महाकाव्ये सर्वत्र उदात्ततत्वम् (उत्कृष्टत्वं) भवेत् ।**

**रघुवंशम्**

- रघूणां वंशः यस्मिन् तत् काव्यम्
- १९ सर्गयुतम् ।
- दिलीपतः अग्निवर्णः २७ राजानः ।
- वाल्मीकिरामायणे बालकाण्डे (७०तमस्य सर्गस्य १९-४३ श्लोकेषु) दिलीपतः श्रीराम-पर्यन्तं १८ राज्ञाम् उल्लेखः ।
- किन्तु रघुवंशे तु पञ्चानां राज्ञाम् एव । दिलीपः, रघुः, अजः, दशरथः,रामः ।

**रघुवंशस्य व्याख्यानम्**

विदुषः मल्लिनाथस्य सञ्जीविनी-व्याख्यानम् एव सर्वोत्कृष्टं प्रामाणिकं च इति परिगण्यते ।

======================

**प्रथमः सर्गः**

**वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये ।**

**जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ॥ १ ॥**

**पदच्छेदः**

वागर्थौ इव **सम्पृ**क्तौ वागर्थ-प्रतिपत्तये जगतः पितरौ वन्दे पार्वती-परमेश्वरौ

**आकाङ्क्षाक्रमः**

- वन्दे ।

- कः ? (अहम्) (अध्याहृतम्)
- कौ ? पार्वतीपरमेश्वरौ
- कीदृशौ ? जगतः पितरौ
- पुनः कीदृशौ ? सम्पृक्तौ
- कौ इव ? वागर्थौ इव
- किमर्थम् ? वागर्थप्रतिपत्तये

**अन्वयार्थः**

- अहम्
- वागर्थौ इव – शब्दार्थौ
  - (अनयोः नित्यसम्बन्धः)
  - (अनित्यसम्बन्धः कयोः ? उदा – जलचन्दनयोः, चन्द्रमेघयोः)
- सम्पृक्तौ – युक्तौ
- जगतः पितरौ
  - जगज्जननीजनकः च –

    अनयोः इष्टार्थप्रदानशक्तिः परमकारुणिकत्वं च वर्तते ।
- पार्वतीपरमेश्वरौ – गौरीशम्भू
- वागर्थप्रतिपत्तये – शब्दार्थयोः सम्यग् ज्ञानार्थम्
- वन्दे – अभिवादये ।

**अन्वयः**

अहं वागर्थौ इव सम्पृक्तौ जगतः

पितरौ पार्वतीपरमेश्वरौ वागर्थप्रतिपत्तये वन्दे ।

**भावः**

अहं शब्दार्थयोः सम्यग्ज्ञानार्थं नित्ययुक्तौ संसारस्य मातापतरौ शिवाशिवौ प्रणमामि । तयोः प्रसादेन मयि काव्यरचनाशक्तिः भवतु ।

**समासः वृत्तिश्च**

- वागार्थौ -वाक् च अर्थः च – इतरेतरद्वन्द्वः
- वागर्थप्रतिपत्तये – वागर्थयोः प्रतिपत्तिः, तस्यै- षष्ठीतत्पुरुषः
- पितरौ- माता च पिता च – एकशेषः
- पार्वतीपरमेश्वरौ
    - पार्वती- पर्वतस्य अपत्यं स्त्री (अपत्यार्थे तद्धितप्रत्ययः 'अण्' + ङीप् स्त्रीप्रत्ययः)
    - परमेश्वरः – परमः ईश्वरः– विशेषणपूर्वपदः कर्मधारयः
    - पार्वतीपरमेश्वरौ – पार्वती च परमेश्वरः च, इतरेतरद्वन्द्वः

**उपमालङ्कारः**

- उपमानम् – वाक्, अर्थः
- उपमेयः -पार्वती, परमेश्वरः
- साधारणधर्मः – सम्पृक्तौ (नित्ययुक्तत्वम्)
- वाचकशब्दः – इव

**मङ्लाचरणम्**

- आशीर्नमस्क्रियावस्तुनिर्देशः इति त्रिविधम् । अत्र कविः नमस्क्रियारूपं मङ्गलम् आचरति ।
- वकारेणग्रन्थारम्भः –'व' इति वर्णः मङ्गलसूचकः ।
    - पाणिनिमहर्षिः अष्टाध्याय्याम्अपि वृद्धिरादैच् इति वकारेण प्रारभते ।

==========================================
======

२. कविः रघूणां महत्त्वम् आत्मनः कवित्त्वशक्तेः लघुत्त्वं च विनयेन निवेदयति ।

**क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः ।**
**तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम् ॥ २ ॥**

**पदच्छेदः**

क्व सूर्यप्रभवः वंशः क्व च अल्पविषया मतिः तितीर्षुः दु**स्तर**म् मोहात् उडुपेन अस्मि सागरम्

**अन्वयार्थः**

- सूर्यप्रभवो वंशः क्व ? – प्रभवति अस्मात् इति प्रभवः (कारणम्)
- अल्पविषया मतिः च क्व ? – परिमित-शक्ति-युक्ता बुद्धिः (मे मतिः)
    - (द्विवारं प्रयुक्तौ क्वशब्दौ – महदन्तरं (महान् भेदः) सूचयतः)
- दुस्तरं सागरं – अत्यन्तं कठिनं यस्मिन् तरणम्
- मोहात् – अज्ञानात्
- उडुपेन – लघुनौकया / प्लवेन
- तितीर्षुः – तरीतुम् इच्छुः
- अस्मि ।

**अन्वयः**

सूर्यप्रभवो वंशः क्व ? अल्पविषया मतिः च क्व ? (अहं) दुस्तरं सागरं मोहात् उडुपेन तितीर्षुः अस्मि ।

**भावः**

लघुना उडुपेन (प्लवेन, चर्मावनद्धेन यानपात्रेण) सागरे प्लवनं एव क्लेशकरं चेत् तस्य पारगमनं तु चिन्तयितुमपि अशक्यम् । तथैव सूर्यात् उत्पन्नस्य वंशस्य अद्भुतं वैभवं मदीया अल्पबुद्धिः आकलयितुम् अपि न शक्नोति, तस्य वंशस्य विषये काव्यलेखनं तु दुःसाध्यं कार्यम् ।

किन्तु सूर्यवंशकथा प्रतिपाद्या (अत्यन्तं प्रसिद्धा उत्कृष्टा च अतः कथयितुं योग्या) इत्यतः रघुवंशं काव्यमिदं लेखितुमिच्छुः अहम् इति कविवरः कथयति ।

**समासः वृत्तिश्च**

- प्रभवः- प्रभवति अस्मात् इति
- सूर्यप्रभवः (वंशः)- सूर्यः प्रभवः यस्य सः – बहुव्रीहिः ।
- अल्पविषया (मतिः)- अल्पः विषयः (ज्ञेयः अर्थः) यस्याः सा – बहुव्रीहिः ।
- दुस्तरम् (सागरम्)– दुर्दुष्टः तरः यस्मिन् सः दुस्तरः, तम् – बहुव्रीहिः ।
- तितीर्षुः – तरीतुम् इच्छुः

**अलङ्कारः**

- निदर्शनालङ्कारः (Illustration) – अत्रअल्पसाधनैः अधिकं साधयितुम् इच्छायाः निदर्शनम् लघुना उडुपेन सागर-पारगमन-इच्छया कृतम् ।

========================================
======

३. कविः काव्यरचनायाः **प्रयोजनं** तस्मिन् स्वस्य असामर्थ्यं च कथयति –

**मन्दः कवियशःप्रार्थी गमिष्याम्युपहास्यताम् ।**

**प्रांशुलभ्ये फले लोभादुद्बाहुरिव वामनः ॥ ३ ॥**

**पदच्छेदः**

मन्दः कावियशःप्रार्थी गमिष्यामि उपहास्यताम् प्रांशुलभ्ये फले लोभात् उद्बाहुः इव वामनः

**आकाङ्क्षाक्रमः**

- गमिष्यामि ।
- कः ? (अहम्) अध्याहृतम्

- कीदृशः अहम्? – मन्दः
- पुनः कीदृशः अहम्? – कवियशःप्रार्थी
- कां (दशाम्) गमिष्यामि– उपहास्यताम्
- कस्मात् (हेतोः) ? – लोभात्
- कः इव ? – वामनः इव
- कीदृशः वामनः ? उद्बाहुः वामनः
- कुत्र उद्बाहुः ? प्रांशुलभ्ये फले (लोभात्) उद्बाहुः इव

**अन्वयार्थः**

- मन्दः – अपटुः, मूढः (अहम्)
- कवियशःप्रार्थी – (मन्दः अस्मि तथापि) काव्यनिर्माणेन जायमानं यशः,
    - तत् महाकविः एव अर्हति, किन्तु अहं तत् प्रार्थनाशीलः
- प्रांशुलभ्ये फले – उन्नतपुरुषेण प्राप्तुं योग्यं यत् फलं, तस्मिन् विषये
- लोभात् -(सामर्थ्याभावात् अनर्हः) तथापि (फलं / यशः) प्राप्तुम् इच्छुः
- उद्बाहुः वामनः इव – फलग्रहणाय उत्तोलितकरः खर्वः (वामनः) इव
- उपहास्यतां – उपहासपात्रत्वं
- गमिष्यामि – प्राप्स्यामि ।

**अन्वयः**

प्रांशुलभ्ये फले लोभात् उद्बाहुः वामनः इव, मन्दः कावियशःप्रार्थी (अहम्) उपहास्यतां गमिष्यामि ।

**भावः**

मदीयं काव्यरचनकौशलं तु अल्पम् । किन्तु महाकवेः यद् यशः भवति तत् प्राप्तुम् इच्छुकः अहं परिहासपात्रतां न प्राप्नुयाम् इति कवेः चिन्ता । यथा उन्नते वृक्षे लम्बमानं फलं प्राप्तुं वामनः (खर्वः) जनः भुजम् उत्तोलयति चेत् तस्य उपहासः भवति ।

**समासः वृत्तिश्च**

- कवियशःप्रार्थी
  - कवियशः – कवीनां यशः (सकारान्त-नपुंसक-पदम्) षष्ठीतत्पुरुषः
  - कवियशःप्रार्थी – तत् कवियशःप्रार्थयितुं शीलम् अस्य
- प्रांशुलभ्ये
  - लभ्यम् – लब्धुं योग्यम्
  - प्रांशुलभ्ये – प्रांशुना लभ्यम्, तस्मिन्

**अलङ्कारः**

- उपमा

**काव्यरचनायाः प्रयोजनम्**

- काव्यरचनायाः**प्रयोजनं** काव्यशास्त्रज्ञाः प्रतिपादयन्ति
  । **मम्मटः** काव्यप्रकाशे काव्यस्य प्रयोजनम् इत्थं प्रतिपादयति ।
  - काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये
    कान्तासम्मितोपदेशयुजे ॥

========================================
======

४. मन्दः चेत् कुतः कवित्त्वे उद्योगः क्रियते ? इति चेत् –

**अथवा कृतवाग्द्वारे वंशेऽस्मिन् पूर्वसूरिभिः ।**
**मणौ वज्रसमुत्कीर्णे सूत्रस्येवास्ति मे गतिः ॥ ४ ॥**

**पदच्छेदः**

अथवा कृत-वाक्-
द्वारे वंशे अस्मिन् पूर्वसूरिभिः मणौ वज्रसमुत्कीर्णे सूत्रस्य इव अस्ति मे ग
तिः

**आकाङ्क्षाक्रमः**

- अस्ति ।
- का अस्ति ? गतिः
- कस्य गतिः ? मे (मम)
- कुत्र ? अस्मिन् वंशे
- कीदृशे वंशे ? पूर्वसूरिभिः कृतवाग्द्वारे
- कस्य (गतिः) इव (मे गतिः)? सूत्रस्य गतिः इव
- सूत्रस्य गतिः कुत्र ? मणौ
- कीदृशे मणौ ? वज्रसमुत्कीर्णे

**अन्वयार्थः**

- अथवा – पक्षान्तरे
- पूर्वसूरिभिः – कविभिः वाल्मीकिव्यासादिभिः
- कृतवाग्द्वारे – (वाक् एव द्वारम् = वाग्द्वारम्, प्रवेशः) कृतः प्रवेशः यस्मिन् (सूर्यवंशे)
- अस्मिन् वंशे – सूर्यप्रभवे वंशे
- वज्रसमुत्कीर्णे मणौ
  - यस्मिन् मणौ अति-तीक्ष्णया वज्र-सूच्या वेधनं क्रियते
  - विद्धम् – रन्ध्रं कृतम् । उत्किरति – engrave, विध्यति – to pierce।
  - या सूची कठोरं रत्नम् प्रविशति सा – रत्नवेधकसूची – तया सूच्या
  - रत्नवित् / विद् – रत्नानि वेत्ति (जानाति) इति रत्नवित् । gemologist
- सूत्रस्य इव – कार्पासतन्तुना सदृशः
- मे – मम
- गतिः अस्ति ।– सञ्चारः अस्ति ।

**अन्वयः**

अथवा पूर्वसूरिभिः कृत-वाक्-द्वारे अस्मिन् वंशे मे गतिः,
वज्रसमुत्कीर्णे मणौ सूत्रस्य (गतिः) इव अस्ति ।

**भावः**

- कठोररत्नेषु प्रथमवारं रन्ध्रकरणं दुष्करम् । बहुमूल्य-कठोर-रत्नेषु रत्नविदा वज्रसूच्या रन्ध्रे कृते सति तत्र सूत्रस्य प्रवेशः सुगमः ।
- आदिकविः वाल्मीकिः, व्यासमुनिः अन्ये च श्रेष्ठकवयः पूर्वमेव रामायणे पुराणेषु च सूर्यवंशकथाः अरचयन् । तैः निर्मितायां वाङ्-मालायाम् अल्पशक्तियुक्तस्य सूत्रस्य इव मम प्रवेशः सरलः इत्यतः अहं रघुवंशप्रबन्धलेखनं कर्तुम् उद्युक्तः अस्मि इति भावः ।

**समासः वृत्तिश्च**

- पूर्वसूरिभिः – पूर्वे च ते सूरयः पूर्वसूरयः,तैः – विशेषण-पूर्वपद-कर्मधारयः
- कृतवाग्द्वारे
  - वाग्द्वारम् – वाक् एव द्वारम् – अवधारण-पूर्वपद-कर्मधारयः
  - कृतवाग्द्वारे (वंशे) – कृतं वाग्द्वारं यस्य सः, तस्मिन् – बहुव्रीहिः
- वज्रसमुत्कीर्णे – वज्रेण समुत्कीर्णः, तस्मिन् – तृतीयातत्पुरुषः

**अलङ्कारः** – उपमा

==========================================
======

श्लोकाः – ५-९ (कुलकम्)

कदाचित् एकस्मिन्नेव श्लोके अर्थपूर्णता न भवति । अत्र पञ्चमाद् आरभ्य नवमश्लोकपर्यन्तं पठ्यते चेदेव अन्वयः भवति ।

**सोऽहमाजन्मशुद्धानाम् आफलोदयकर्मणाम् ।**
**आसमुद्रक्षितीशानामानाकरथवर्त्मनाम् ॥ ५ ॥**
**यथाविधिहुताग्नीनां यथाकामार्चितार्थिनाम् ।**
**यथाऽपराधदण्डानां यथाकालप्रबोधिनाम् ॥ ६ ॥**
**त्यागाय सम्भृतार्थानां सत्याय मितभाषिणाम् ।**
**यशसे विजिगीषूणां प्रजायै गृहमेधिनाम् ॥ ७ ॥**
**शैशवेऽभ्यस्तविद्यानां यौवने विषयैषिणाम् ।**
**वार्धके मुनिवृत्तीनां योगेनान्ते तनुत्यजाम् ॥ ८ ॥**
**रघूणामन्वयं वक्ष्ये तनुवाग्विभवोऽपि सन् ।**
**तद्गुणैः कर्णमागत्य चापलाय प्रचोदितः ॥ ९ ॥**
पदच्छेदः

सः अहम् आजन्मशुद्धानाम् आफल-उदय-
कर्मणाम् आसमुद्राक्षितीशानाम् आनाक-रथ-वर्त्मनाम् ।।5।।

यथा-विधि-हुत-अग्नीनाम् यथा-कामार्चित-अर्थिनाम् यथा-अपराध-
दण्डानाम् यथा-काल-प्रबोधिनाम् ।।6।।

त्यागाय सम्भृत-अर्थानाम् सत्याय मित-भाषिणाम् यशसे विजिगीषूणाम्
प्रजायै गृहमेधिनाम् ।।7।।

शैशवे अभ्यस्त-विद्यानाम् यौवने विषयैषिणाम् वार्धके मुनि-वृत्तीनाम्
योगेन अन्ते तनु-त्यजाम् ।।8।।

रघूणाम् अन्वयम् वक्ष्ये तनु-वाक्-विभवः अपि सन् तद्गुणैः कर्णम् आगत्य
चापलाय प्रचोदितः ।।9।।

**अन्वयः**

सः अहम्,

आजन्मशुद्धानाम्, आफलोदयकर्मणाम्, आसमुद्रक्षितीशानाम्, आनाकरथव र्त्मनां, यथाविधिहुताग्नीनां, यथाकामार्चितार्थिनां, यथाऽपराधदण्डानां, यथाकालप्रबोधिनां, त्यागाय सम्भृतार्थानां, सत्याय मितभाषिणां, यशसे विजिगीषूणां, प्रजायै गृहमेधिनां, शैशवेऽभ्यस्तविद्यानां, यौवने विषयैषिणां, वार्धके मुनिवृत्तीनां, योगेनान्ते तनुत्यजां रघूणाम् अन्वयं कर्णम् आगत्य, तनुवाग्विभवः अपि, तद्गुणैः चापलाय प्रचोदितः सन् अहं वक्ष्ये ।

**५. श्लोकः अन्वयार्थः**

- सः अहम् –मन्दः, कवियशःप्रार्थी सूर्यवंशरूपं सागरं तितीर्षुः अहम्, तथापि पूर्वतनमहाकवीनाम् परिश्रमेण अस्मिन् वंशे लब्धप्रवेशः अहम्
- "आङ् मर्यादाऽभिविध्यर्थे" इति**अव्ययीभावसमासः**
  - मर्यादार्थे – आमरणम् – तेन विना – मरणपर्यन्तम् । अभिविधिः – आजन्मनः – तेन सह – (जन्मनः आरभ्य) ।
  - आजन्मशुद्धानाम् – जन्मनः आरभ्य शुचीनाम् (सर्वसंस्कारसम्पन्नानाम्)
  - आफलोदयकर्मणाम् – फलप्राप्तिपर्यन्तं स्वीकृतकर्मणि निरतानाम् ।
  - आसमुद्रक्षितीशानाम् –सार्वभौमाणाम् (कस्यचित् भूभागस्य न अपि तु समग्रभूम्याः एव चक्रवर्तिनः)
  - आनाकरथवर्त्मनाम् -रघवः स्वर्गलोकपर्यन्तं स्वकीयेन रथेनैव गच्छन्ति स्म, ततः आगच्छन्ति स्म ।

**समासः वृत्तिश्च**

- अवधेयम् – अस्मिन् श्लोके चतुर्षु अपि पदेषु अव्ययीभावः अभिविध्यर्थे भवति ।
  - “आङ् मर्यादाऽभिविध्योः” इति **अव्ययीभावसमासः**। उदा –
    - मर्यादार्थे – आ मरणात् (तेन विना) – मरणपर्यन्तम् इत्यर्थः ।
      - आमरणं खलु सुखदुःखम् ।
    - अभिविधिः – आ बालात् – (तेन सह, बालान् अभिव्याप्य)
      - आबालं हरिभक्तिः ।
    - आजन्मशुद्धानाम्
      - आजन्म – आ जन्मनः इति
      - आजन्मशुद्धानाम् – आजन्म शुद्धाः, तेषाम्
    - आफलोदयकर्मणाम्
      - फलोदयः – फलस्य उदयः
      - आफलोदयम् – फलोदयम् अभिव्याप्य
      - आफलोदयकर्मणाम् – आफलोदयम् कर्म येषां ते, तेषाम्
    - आसमुद्रक्षितीशानाम्
      - क्षितीशाः – क्षितेः ईशाः
      - आसमुद्रम् – समुद्रम् अभिव्याप्य
      - आसमुद्रक्षितीशानाम् – आसमुद्रं क्षितीशाः, तेषाम्
    - आनाकरथवर्त्मनाम्
      - रथवर्त्म – रथस्य वर्त्म
      - आनाकम् – नाकम् अभिव्याप्य
      - आनाकरथवर्त्मनाम् – आनाकं रथवर्त्म येषां ते, तेषाम्

**६. श्लोकः अन्वयार्थः**

- यथाविधिहुताग्नीनाम् – ये विधिपूर्वकम् अग्नीन् उपासितवन्तः
- यथाकामार्चितार्थिनाम् – ये याचकान् यथेष्टं दानेन सत्कृतवन्तः

- यथाऽपराधदण्डानां – ये अपराधानुसारेण दुष्टान् दण्डितवन्तः
- यथाकालप्रबोधिनाम् – ये सर्वेषु सन्दर्भेषु जागरूकाः भवन्ति। प्रबुद्धः – प्रबोधनशीलः – alert, conscious
- देवतायजने, अतिथिसत्कारे, दण्डधरत्वे, प्रजापालने, समयपालने च जागरूकाः इत्यर्थः ।

**समासः वृत्तिश्च**

- अवधेयम् – पदार्थानतिवृत्त्यर्थे (अनतिवृत्तिः) अव्ययीभावसमासः । उदा – यथाविधि यथाकामं यथापराधं यथाकालम् । अत्र समस्तपदं नपुंसकलिङ्गे भवति ।
  - यथाविधिहुताग्नीनाम्
    - यथाविधि – विधिम् अनतिक्रम्य
    - यथाविधिहुताग्नीनाम्- यथाविधि हुतः अग्निः यैः, यथाविधिहुताग्नयः, तेषां
  - यथाकामार्चितार्थिनाम्
    - यथाकामम् – कामम् अनतिक्रम्य
    - यथाकामार्चितार्थिनाम् – यथाकामम् अर्चिताः आर्थिनःयैः रघुभिः ते यथाकामार्चितार्थिनः, तेषां
  - यथाऽपराधदण्डानाम्
    - यथापरधम् – अपराधम् अनतिक्रम्य
    - यथाऽपराधदण्डानाम् – यथापराधं दण्डः ते, तेषाम्
  - यथाकालप्रबोधिनाम्
    - यथाकालम् – कालम् अनतिक्रम्य
    - यथाकालप्रबोधिनाम् – यथाकालं प्रबोधिनः यथाकालप्रबोधिनः, तेषाम्

७. श्लोकः **अन्वयार्थः**

- त्यागाय सम्भृतार्थानाम् – ये सत्पात्रे विनियोगाय धनसञ्चयम् अकुर्वन्
- सत्याय मितभाषिणाम्-सत्यस्य रक्षणाय अल्पं भाषन्ते स्म
- यशसे विजिगीषूणां – कीर्त्यैः विजेतुम् इच्छुकाः
- प्रजायै गृहमेधिनाम् – सन्तानप्राप्त्यै विवाहम् अकुर्वन्

**समासः वृत्तिश्च**

- सम्भृतार्थानाम् – सम्भृतः अर्थः यैः ते – सम्भृतार्थाः, तेषाम् – बहुव्रीहिः
- मितभाषिणाम् – मितं भाषन्ते, तच्छीलाः, मितभाषिणः, तेषाम्
- विजिगीषूणाम् – विजेतुम् इच्छवः, तेषाम् – सन्नन्त-प्रत्ययः
- गृहमेधिनाम् – गृहैः (दारैः) मेधन्ते (सङ्गच्छन्ते), तच्छीलाः – गृहमेधिनः, तेषाम्
    - अवधेयम् – पत्नीशब्दस्य पर्यापदानि
        - गृह (पुं / नपुं)
        - दाराः (पुं, नित्यबहुवचनम्)
        - कलत्रम् (नपुं.)

**८. श्लोकः अन्वयार्थः**

- शैशवे अभ्यस्तविद्यानाम् – ये ब्रह्मचर्याश्रमे विद्याम् अभ्यसितवन्तः, तेषाम्
- यौवने विषयैषिणाम् – ये गृहस्थाश्रमे भोगाभिलाषं कृतवन्तः, तेषाम्
- वार्धके मुनिवृत्तीनम् – ये वानप्रस्थाश्रमे मुनिवत् अवर्तन्त, तेषाम्
- योगेनान्ते तनुत्यजाम् – ये संन्यासाश्रमे अन्ते समाधिना प्राणान् अत्यजन्, तेषाम्

**समासः वृत्तिश्च**

- शैशवे – शिशोः भावः शैशवम्, तस्मिन्
- अभ्यस्तविद्यानाम् –अभ्यस्ताः विद्याः यैः ते अभ्यस्तविद्याः, तेषाम् – बहुव्रीहिः

- यौवने – यूनः भावः यौवनम्, तस्मिन्
- विषयैषिणाम् – विषयम् इच्छन्ति, तच्छीलाः – वियैषिणः, तेषाम्
- वार्धके – वृद्धस्य भावः वार्धकम्, तस्मिन्
- मुनिवृत्तीनाम् – मुनीनां वृत्तिः इव वृत्तिः येषां ते मुनिवृत्तयः, तेषाम् – बहुव्रीहिः
- तनुत्यजाम् – तनुं त्यजन्ति इति तनुत्यजः, तेषाम् – उपपदसमासः

**९. श्लोकः अन्वयार्थः**

- तनुवाग्विभवः अपि – अल्पकथनशक्तिः यस्य (तादृशः सन् अपि अहम्)
- तद्गुणैः कर्णम् आगत्य – तेषां रघूणाम् आजन्मशुद्धिः इत्यादिभिः गुणैःकर्णम् आगत्य
- चापलाय – आकृष्टः सन् कार्यं कर्तुम्
    - दोषम् अविमृश्य कार्यकरणं चापलम्
    - (चापलं कर्तुं प्रचोदितः इति मल्लिनाथस्य टीका- To act on impulse without giving much thought)
- प्रचोदितः सन् वक्ष्ये – प्रेरितः अहं वदिष्यामि ।

**समासः वृत्तिश्च**

- तनुवाग्विभवः
    - वाग्विभवः – वाचां विभवः – षष्ठीतत्पुरुषः
    - तनुवाग्विभवः – तनुः वाग्विभवः यस्य सः – बहुव्रीहिः
- तद्गुणैः – तेषां गुणाः तद्गुणाः, तैः – षष्ठीतत्पुरुषः
- चापलाय – चपलस्य भावः चापलम्, तस्मै

**भावः**

- अहं (कविः) जन्मनः आरभ्य शुद्धचरित्राणां, फलप्राप्ति-पर्यन्तं स्वीकृतात् कार्यात् ये न विरताः अभवन् तादृशानां, ये समुद्रपर्यन्तां समग्रां भूमिं शासितवन्तः तादृशानां, ये देवासुरयुद्धेषु इन्द्रस्य साहाय्यार्थं देवलोकं

प्रति स्वरथेन एव अगच्छन् ततः आगच्छन् च तादृशानां (रघूणाम् अन्वयं वक्षये)

- ये वेदानुसारेण नित्यम् अग्निषु होमम् अकुर्वन्, ये इष्टवस्तुदानेन याचकान् सत्कृतवन्तः, ये दुष्टानाम् अपराधानुसारेण दण्डं विहितवन्तः, ये उत्थानादेः आरभ्य सर्वकार्ये सर्वदा च जागरूकाः आसन्, तादृशानां (रघूणाम् अन्वयं वक्षये)
- ये सत्पात्रेभ्यः दातुम् अर्थसञ्चयम् अकुर्वन् न तु दुर्व्यापाराय, ये सत्यस्य रक्षणाय मितभाषणशीलाः आसन् न तु अन्येषाम् उपेक्षायै (यथा गर्वितः जनः अन्यं उपेक्षते disregards), ये कीर्त्यै विजेतुम् इच्छुकाः आसन् न तु अर्थसङ्ग्रहाय, ये सन्तानाय गृहस्थाश्रमं प्राविशन् न तु कामोपभोगाय, तादृशानां (रघूणाम् अन्वयं वक्षये)
- ये ब्रह्मचर्ये विद्यायाः उपार्जनम् अकुर्वन्, ये गृहस्थाः सन्तः विषयोपभोगम् अकुर्वन्, ये वानप्रस्थे मुनिव्रतम् अनुष्ठितवन्तः, ये प्रयाणकाले च परमात्मानं ध्यायन्तः देहम् अत्यज्यन्, तादृशानां (रघूणाम् अन्वयं वक्षये)
- (अहम्) अल्पवाक्पटुः अपि इक्ष्वाकूणां कथां रचयिष्यामि यतः शीलवतां तेषां गुणाः मां प्रबन्धरचनाय अनुरुन्धन्ति ।
    - अनुरुन्धन्ति – अनुरोधं कुर्वन्ति – nudge, coax, persuade

==========================================
======

१०. श्रोतारः / वाचकाः कीदृशाः ?

**तं सन्तः श्रोतुमर्हन्ति सदसद्व्यक्तिहेतवः**
**हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकाऽपि वा ॥ १० ॥**
**पदच्छेदः**

तम् सन्तः श्रोतुम् अर्हन्ति सत्-असत्-
व्यक्तिहेतवः हेम्नः संलक्ष्यते हि अग्नौ विशुद्धिः श्यामिका अपि वा

**आकाङ्क्षाक्रमः**

- अर्हन्ति ।
- के अर्हन्ति ? सन्तः
- कीदृशाः सन्तः ? सदसद्व्यक्तिहेतवः
- किं कर्तुम् अर्हन्ति ? श्रोतुम्
- कं श्रोतुम् ? तम्(प्रबन्धम्)
- हि
- संलक्ष्यते
- कस्य ? हेम्नः
- हेम्नः किं संलक्ष्यते ? विशुद्धिः श्यामिका अपि वा
- कुत्र? – अग्नौ

**अन्वयार्थः**

- सदसद्व्यक्तिहेतवः- गुणदोषयोः विवेचनं ये कुर्वन्ति ते
- सन्तः – सहृदयाः
- तं- रघुवंशाख्यं प्रबन्धम्
- श्रोतुम् – आकर्णयितुम्
- अर्हन्ति – योग्याः भवन्ति ।
- हि हेम्नः – यथा हि स्वर्णस्य (निश्चयार्थे हि इति निपातः प्रयुक्तः)(हेम इति प्रथमाविभक्तौ नामन् शब्दः इव हेमन् शब्दः नपुंसकलिङ्गः )
- विशुद्धिः – निर्दोषत्वम् (स्वर्णस्य शुद्धता)
- श्यामिका अपि वा – दोषः वा (लोहान्तरस्य मिश्रितत्वम्)
- अग्नौ – पावके

- संलक्ष्यते । – ज्ञायते (न अन्यत्र ज्ञायते)

**अन्वयः**

सत्-असत्-

व्यक्तिहेतवः सन्तः **तं** श्रोतुम् अर्हन्ति । हेम्नः विशुद्धिः श्यामिका अपि वा अग्नौ संलक्ष्यते हि ।

**भावः**

गुणदोषभेदज्ञातारः सहृदयाः एव एतं प्रबन्धं श्रोतुम् अर्हन्ति । यथा अग्निः स्वर्णस्य शुद्धताशुद्धतायाः प्रमाणं तथैव सहृदयाः (सन्तः) उत्तम-मध्यम-अवरकाव्यानां विवेचने अधिकारिणः भवन्ति ।

**समासः वृत्तिश्च**

- सदसद्व्यक्तिहेतवः
  - सदसती – सत् च असत् च, इतरेतरद्वन्द्वः
  - सदसद्व्यक्तिः – सदसतोः व्यक्तिः, षष्ठीतत्पुरुषः
  - सदसद्व्यक्तिहेतवः – सदसद्व्यक्तेः हेतवः, षष्ठीतत्पुरुषः

========================================
===

११. प्रबन्धे वर्णनीयं वस्तु –

**वैवस्वतो मनुर्नाम माननीयो मनीषिणाम् ।**

**आसीन्महीक्षितामाद्यः प्रणवश्छन्दसामिव ॥ ११ ॥**

**पदच्छेदः**

वैवस्वतः मनुः नाम माननीयः मनीषिणाम् आसीत् महीक्षिताम् आद्यः प्रण वः छन्दसाम् इव

**आकाङ्क्षाक्रमः**

- आसीत्
- कः? वैवस्वतः नाम मनुः
- कीदृशः ? माननीयः
- केषाम् माननीयः ? मनीषिणाम्
- पुनः कीदृशः ? आद्यः
- केषाम् आद्यः ? महीक्षिताम्
- कः इव? छन्दसां प्रणवः इव

**अन्वयार्थः**

- मनीषिणां माननीयः – विदुषां पूज्यः
- वैवस्वतः नाम मनुः – वैवस्वतः इति प्रसिद्धः मनुः
- छन्दसां प्रणवः इव – वेदानाम् ओंकारः इव
- महीक्षिताम् – भूपालानाम्
- आद्यः – आदिभूतः
- आसीत् – अभवत्

**अन्वयः**

मनीषिणां माननीयः, वैवस्वतः नाम मनुः,
महीक्षिताम् आद्यः, प्रणवः छन्दसाम् इव आसीत् ।

**भावः**

सूर्यपुत्रः वैवस्वतः नामकः मनुः तद्वंशस्य आद्यः राजा आसीत् । यथा प्रणवः वेदानाम् आद्यः भवति ।

**समासः वृत्तिश्च**

- मनीषिणाम् –
    - मनीषा – मनसः ईषा (गमनम्)।

- मनीषिणः – मनीषा एषाम् अस्ति इति, तेषाम् ।
    - अवधेयम्- “इष् गतौ” इति गत्यर्थकः धातुः बुद्ध्यर्थे अपि भवति । मनः व्यापारयन्ति (apply their minds) । बुद्धिमन्तः ।
- माननीयः – मन् (मन्यते) + णिच् (मानयति) + अनीयर्
- वैवस्वतः – विवस्वतः अपत्यं पुमान् । विवस्वान् – सूर्यः।
- महीक्षिताम् – महीं क्षियन्ति इति, तेषाम् – उपपद-समासः
    - अवधेयम् – क्षि धातोः त्रयः अर्थाः
        - “क्षि क्षये”– क्षयति
        - “क्षिहिंसायाम्” – क्षिणोति
        - “क्षिनिवासगत्योः” – क्षियति
        - अत्र “क्षि निवासगत्योः”क्षियति वसत्यस्याम् ।

=========================================

१२. रघोः पितुः नाम –

**तदन्वये शुद्धिमति प्रसूतः शुद्धिमत्तरः ।**
**दिलीप इति राजेन्दुरिन्दुः क्षीरनिधाविव ॥ १२ ॥**
**पदच्छेदः**

तदन्वये शुद्धिमति प्रसूतः शुद्धिमत्तरः दिलीपः इति राज-इन्दुः इन्दुः क्षीर-निधौ इव

**आकाङ्क्षाक्रमः**

- प्रसूतः (अभवत्)
- कः ? दिलीपः

- दिलीपः कुत्र (कस्मिन् वंशे) प्रसूतः ? – तदन्वये (तद्वंशे)
- कीदृशे अन्वये – शुद्धिमति (शुद्धिमान् अन्वयः)
- कीदृशः दिलीपः ? शुद्धिमत्तरः
- पुनः कीदृशः दिलीपः ? राजेन्दुः
- कः इव ? क्षीरनिधौ इन्दुः इव

**अन्वयार्थः**

- शुद्धिमति तदन्वये – निर्मले तस्मिन् वंशे, मनोः कुले
- शुद्धिमत्तरः – पवित्रतरः (अतिशयेन शुद्धिमान्)
- दिलीपः इति राजेन्दुः – दिलीपः नामकः राजश्रेष्ठः
- क्षीरनिधौ इन्दुः इव – क्षीरसागर-मथनावसरेचन्द्रः इव
- प्रसूतः – जातः

**अन्वयः**

तत् शुद्धिमति अन्वये प्रसूतः अभवत् शुद्धिमत्तरः दिलीपः इति राज-इन्दुः क्षीर-निधौ इन्दुः इव ।

**भावः**

सूर्यपुत्रः वैवस्वतः नामकः मनुः तद्वंशस्य आद्यः राजा आसीत् । यथा प्रणवः वेदानाम् आद्यः भवति ।

वैवस्वतमनोः पवित्रे वंशे अतिपवित्रः दिलीपः नामकः श्रेष्ठः राजा तथा जातः यथा क्षीरसागरे चन्द्रः उत्पन्नः ।

क्षीरसमुद्रस्य मथनसमये कौस्तुभ-कामधेनु-कल्पतरु-ऐरावत-उच्चैश्रवस्प्रभृतयः आविर्भूताः । यथा चन्द्रः स्वयं उज्ज्वलतरः तस्य उत्पत्तिस्थलम् (क्षीरनिधिः) अपि पवित्रं तथैव पवित्रे मनुकुले पवित्रतरः दिलीपः जन्म अलभत ।

**समासः वृत्तिश्च**

- तदन्वये – सः अन्वयः तदन्वयः, तस्मिन् – विशेषण-पूर्वपद-कर्मधारयः
- शुद्धिमान्- शुद्धिः अस्य (अन्वयस्य) अस्ति इति – (मतुप् प्रत्ययः)
- शुद्धिमत्तरः – अतिशयेन शुद्धिमान् इति – (तरप् प्रत्ययः)
- राजेन्दुः – राजा इन्दुः इव – उपमानोत्तरपद-कर्मधारयः
- क्षीरनिधौ – क्षीरस्य निधिः, तस्मिन् – षष्ठीतत्पुरुषः

=======================================
===

१३. दिलीपस्य वर्णनम्

**व्यूढोरस्को वृषस्कन्धः शालप्रांशुर्महाभुजः ।**
**आत्मकर्मक्षमं देहं क्षात्रो धर्म इवाश्रितः ॥ १३ ॥**

पदच्छेदः

व्यूढ-उरस्कः वृष-स्कन्धः शाल-प्रांशुः महा-भुजः आत्मकर्मक्षमम् देहम्
क्षात्रः धर्मः इव आश्रितः

**अन्वयार्थः**

- व्यूढोरस्कः – यस्य वक्षस्थलं विपुलम् / स्फारम्
- वृषस्कन्धः – यस्य स्कन्धः वृषभस्य स्कन्धः इव आसीत्
- शालप्रांशुः – सर्जवृक्षः इव उन्नतः
- महाभुजः – यस्य बाहू दीर्घौ स्तः, दीर्घबाहुः
- (सः) आत्मकर्मक्षमं देहं आश्रितः – स्व-व्यापारस्य अनुरूपं देहं प्राप्तवान्
- क्षात्रः धर्मः इव – पराक्रमोत्साहानां मूर्तरूपं इव (क्षत्रः– क्षत्रियः)
- (स्थितः)– (अध्याहृतम्)

**अन्वयः**

व्यूढ-उरस्कः वृष-स्कन्धः शाल-प्रांशुः महा-भुजः, क्षात्रः धर्मः इव, आत्मकर्मक्षमं देहम् आश्रितः ।

**भावः**

दिलीपः क्षात्रबलयुतः क्षात्रगुणोपेतः च आसीत् । तस्य वक्षस्थलं विशालम् आसीत्, तस्य स्कन्धः वृषभस्य स्कन्धः इव शक्त्युपेतः आसीत्, उन्नतकायस्य तस्य बाहू दीर्घौ आस्ताम् ।

**समासः वृत्तिश्च**

- व्यूढोरस्कः – व्यूढम् उरः यस्य सः, बहुव्रीहिः। "उरः प्रभृतिभ्यः कप्" इति समासान्ते 'कप्' प्रत्ययः ।
- वृषस्कन्धः -वृषस्य स्कन्धः इव स्कन्धः यस्य सः, बहुव्रीहिः
- शालप्रांशुः -शालः इव प्रांशुः, उपमा-पूर्वपद-कर्मधारयः
- महाभुजः -महान्तौ भुजौ यस्य सः, बहुव्रीहिः
- आत्मकर्मक्षमम्
  - आत्मकर्म – आत्मनः कर्म – षष्ठीतत्पुरुषः
  - आत्मकर्मक्षमः – आत्मकर्मणि क्षमः (समर्थः), तम्- सप्तमीतत्पुरुषः
- क्षात्रः- क्षत्रस्य अयम् – तद्धितान्तः

========================================

१४. श्लोकद्वयेन (१४,१५) दिलीपस्य **स्थितिगती** वर्ण्येते –

**सर्वातिरिक्तसारेण सर्वतेजोऽभिभाविना ।**

**स्थितः सर्वोन्नतेनोर्वीं क्रान्त्वा मेरुरिवात्मना ॥ १४ ॥**

**पदच्छेदः**

सर्व–अतिरिक्त–सारेण सर्व–तेजः अभिभाविना स्थितः सर्व–
उन्नतेन उर्वीम् क्रान्त्वा मेरुः इव आत्मना

**अन्वयार्थः**

- सर्वातिरिक्तसारेण –सर्वेभ्यः भूतेभ्यः अधिकबलेन (सारः – बलम्)
- सर्वतेजोऽभिभाविना – स्वतेजसा सर्वाणि भूतानि पराजयते (अभिभवः – गर्वनाशः)
- सर्वोन्नतेन आत्मना -सर्वेभ्यः उन्नतशरीरेण (आत्मा = देहः, मनः, स्वभावः); मेरोः पक्षे महोन्नतः, राज्ञः पक्षे महामनाः
- मेरुः इव – मेरुतुल्यः
    - अवधेयम् – सर्वातिरिक्तसारः सर्वतेजोऽभिभावी सर्वोन्नतः – एतानि मेरोः अपि विशेषणानि ।
    - “मेरुस्तु शुशुभे दिव्यो राजवत्समधिष्ठितः ।”
- उर्वीम् – पृथिवीम्
- क्रान्त्वा – अतिरिच्य, “क्रम् पादविक्षेपे” (क्रामति, क्राम्यति, क्रमते) + क्त्वा(having surpassed)
- स्थितः – विराजते स्म ।

**अन्वयः**

(दिलीपः) सर्वातिरिक्तसारेण सर्वतेजोऽभिभाविना सर्वोन्नतेन आत्मना, मेरुः इव उर्वीम् क्रान्त्वा, स्थितः ।

**भावः**

सर्वेषां प्राणिनाम् अपेक्षया बलवत्तरः दिलीपः सर्वान् स्वतेजसा पराजेतुं प्रभवति स्म । आत्मौन्नत्येन पृथिवीम् एव वशीकृत्य आसमुद्रक्षितीशः सन् विराजते स्म । यथा मेरुः भुवः मध्ये प्रतिष्ठितः, तथा मध्यमणिन्यायेन इतरराज्ञाम् अपेक्षया महाकायः महामनाः महाबलः

पराक्रमी दिलीपः नृपसमूहस्य धुरि विराजते इति अत्र
दिलीपस्य **स्थितिः** वर्ण्यते । Note: धूः – yoke, pole । **धुरि** – सप्तमी, प्रधानांगतया इत्यर्थः ।

**समासः वृत्तिश्च**

- सर्वातिरिक्तसारेण – सर्वेभ्यः अतिरिक्तः सारः यस्य सः(सारतरः), तेन – बहुव्रीहिः
- सर्वतेजोऽभिभाविना – सर्वान् तेजसा अभिभवति इति सर्वतेजोऽभिभावी, तेन
- सर्वोन्नतेन – सर्वेभ्यः उन्नतः, तेन

========================================

**आकारसदृशप्रज्ञः प्रज्ञया सदृशागमः ।**
**आगमैः सदृशारम्भ आरम्भसदृशोदयः ॥ १५ ॥**

**पदच्छेदः**

आकार–सदृश–प्रज्ञः प्रज्ञया सदृश–आगमः आगमैः सदृश–आरम्भः आरम्भ–सदृशः उदयः

**अन्वयार्थः**

- आकारसदृशप्रज्ञः =मूर्त्या (शरीरेण) अनुरूपा मतिः
- प्रज्ञया सदृशागमः = बुद्धेः अनुरूपः शास्त्रपरिश्रमः
- आगमैः सदृशारम्भः = आगमानाम् (अध्ययनस्य) अनुरूपं कर्म
- आरम्भसदृशोदयः = कर्मणः अनुरूपः फलोदयः

**अन्वयः**

आकार–सदृश–प्रज्ञः प्रज्ञया सदृश–आगमः आगमैः सदृश–आरम्भः आरम्भ–सदृशः उदयः ।

**भावः**

आकारानुगुणा बुद्धिः, बुद्धेः अनुगणं शास्त्रज्ञानं, ज्ञानानुगुणं कर्म, कर्मानुगुणा फलप्राप्तिः इति यद् परस्परं अनुरूपत्वं तद् लोके अनितरसाधरणम् । अत्र राज्ञः दिलीपस्य **गतिः** वर्ण्यते ।

**समासः वृत्तिश्च**

- आकारसदृशप्रज्ञः – आकारेण सदृशी प्रज्ञा यस्य सः – बहुव्रीहिः
- आरम्भसदृशोदयः – आरम्भेण सदृशः उदयः यस्य सः – बहुव्रीहिः

====================================

**१६.** प्रतीपगुणौ (contradictory qualities) किन्तु नृपोचितौ –

**भीमकान्तैर्नृपगुणैः स बभूवोपजीविनाम् ।**
**अघृष्यश्चाभिगम्यश्च यादोरत्नैरिवार्णवः ॥ १६ ॥**

**पदच्छेदः**

भीमकान्तैः नृपगुणैः सः बभूव उपजीविनाम् अघृष्यः च अभिगम्यः च यादो रत्नैः इव अर्णवः

**अन्वयार्थः**

- भीमकान्तैः = तेजो-बल-प्रताप-वीर्य-शौर्यादिभिः भयङ्करैः (गुणैः) च। कुल-शील-दया-सत्यादिभिः आकर्षकैः (गुणैः) च ।
- नृपगुणैः =राज्ञां गुणैः
- सः = चक्रवर्ती दिलीपः
- उपजीविनाम् =आश्रितानाम्
- यादोरत्नैः = जलजन्तुभिः रत्नैः च
- अर्णवः इव = समुद्रः इव
- अघृष्यः च= अजेयः / अनभिभवनीयः (घृष्यः = घर्षितुं योग्यः, “घृष् सङ्घर्षे स्पर्धायां च” + यत् प्रत्ययः – unchallenged)

- अभिगम्यः च =आश्रयितुं योग्यः (अभिगन्तुं योग्यः, अभि + गम् + यत्)
- बभूव =अभवत् ।

**अन्वयः**

सः यादोरत्नैः अर्णवः इव,

भीमकान्तैः नृपगुणैः उपजीविनाम् अघृष्यः च अभिगम्यः च बभूव ।

**भावः**

यथा समुद्रजन्तुभ्यः मकरमहाग्राहतिमिङ्गिलादिभ्यः भीताः समुद्रात् अपगच्छन्ति किन्तु केचन तरणपटवः विगाहकाः (divers) रत्नाकरे निहितानि रत्नानि प्राप्तुं तम् अभिगच्छन्ति अपि तथैव केचन एव अनुचराः प्रीत्या कदाचित् राजानम् उपसर्पन्ति कदाचित् भीत्या राज्ञः अपगच्छन्ति अपि । तथैव दिलीपचक्रवर्तिनम् आश्रिताः राजानः तं घर्षितुं (to challenge) प्रयतन्ते चेत् पराजिताः भवन्ति, किन्तु मित्रभावेन अनुकूलाः सन्तः चक्रवर्तिनः मैत्रीं सम्पादयन्ति, इति भावः ।

**समासः वृत्तिश्च**

- भीमकान्तैः= भीमाः च कान्ताः च – भीमकान्ताः, तैः – इतरेतरद्वन्द्वः
- यादोरत्नैः = यादांसि च रत्नानि च – यादोरत्नानि, तैः -इतरेतरद्वन्द्वः
- अघृष्यः
  - घृष्यः – घर्षितुं योग्यः । घृष् "सङ्घर्षे स्पर्धायां च" + यत् प्रत्ययः
  - अघृष्यः – न घृष्यः – नञ् तत्पुरुषः
- अभिगम्यः -अभिगन्तुं योग्यः । अभि + गम् + यत् प्रत्ययः

==================================

**रेखामात्रमपि क्षुण्णादा मनोवर्त्मनः परम् ।**
**न व्यतीयुः प्रजास्तस्य नियन्तुर्नेमिवृत्तयः ॥ १७ ॥**

**पदच्छेदः**

रेखामत्रम् अपि क्षुण्णात् आ मनोवर्त्मनः परम् न व्यतीयुः प्रजाः तस्य नियन्तुः नेमिवृत्तयः

**अन्वयार्थः**

- नियन्तुः तस्य – रथपक्षे सारथेः, राज्ञः पक्षे शासकस्य(charioteer / guide)
- नेमिवृत्तयः
  - नेमिः – रथाङ्गम् । रथचक्रस्य परिधिः, यः भागः भूमिं स्पृशति ।(the circumference or the rim of the wheel)
  - नेमिवृत्तयः- रथ-चक्रधाराणां व्यापारः । रथपक्षे सर्वेषां चक्राणां समपथे वर्तनम्, राज्यकार्यपक्षे सैन्य-कोष-वाणिज्यादीनां राज्याङ्गानां सुष्ठु निर्वहणम् । (those whose actions are like the actions of the rim of the wheel)
- प्रजाः – जनताः
- आ मनोः– मनोः आरभ्य (अभिविध्यर्थे, मनुमपि योजयित्वा इत्यर्थः)
- क्षुण्णात् – रथस्य गतेः पक्षे प्रहतात् (प्रताडितात्)/ प्रजानाम् अभ्यस्तात् (beated / practised)
- वर्त्मनः – मार्गात् / आचारपद्धतेः( नकारान्तः पुंलिङ्गः वर्त्मन् शब्दः)
- परम् -अधिकम्
- रेखामात्रमपि -ईषदपि (प्रमाणे मात्रच् प्रत्ययः) (even a little – even to the width of a line)
- न व्यतीयुः –न अतिक्रान्तवत्यः । (not swerved)
  - व्यतीयुः – वि+ अति + इण् “इण् गतौ”, विधिलिङ्, प्र.पु., बहु.

**अन्वयः**

नियन्तुः तस्य नेमिवृत्तयः प्रजाः, आ मनोः क्षुण्णात् वर्त्मनः परम्, रेखामात्रमपि न व्यतीयुः ।

**भावः**

रथस्य अग्रचक्राभ्यां मार्गे कृतं चिह्नम् एव पृष्ठतः स्यन्दमाने चक्रे निरन्तरम् अनुसरतः, इतस्ततः रेखामात्रमपि नैव अतिक्रामतः । तथैव दिलीपस्य प्रजापालनकौशलेन सर्वाः प्रजाः पूर्वजैः अभ्यस्तात् (मनुना उक्तात्) आचार-व्यवहार-पद्धतेः ईषदपि विचलिताः नाभवन् । वर्णधर्मान् पालयन्तः सर्वाः प्रजाः स्वधर्मे निरताः आसन् इति भावः ।

**समासः वृत्तिश्च**

- नेमिवृत्तयः (प्रजाः) – नेमीनां वृत्तिः इव वृत्तिः यासां (प्रजानां) ताः – बहुव्रीहिः
- आ मनोः – मनुम् आरभ्य
- रेखामात्रम् – रेखा प्रमाणम् अस्य इति (प्रमाणे मात्रच् प्रत्ययः)
- क्षुण्णात् – क्षुद् "क्षुदिर्सम्पेषणे" + क्तप्रत्ययः क्षुण्णः, तस्मात् । लट्. क्षुणत्ति

========================================

**प्रजानामेव भूत्यर्थं स ताभ्यो बलिमग्रहीत् ।**
**सहस्रगुणमुत्स्रष्टुम् आदत्ते हि रसं रविः ॥ १८ ॥**

**पदच्छेदः**

प्रजानाम् एव भूत्यर्थम् सः ताभ्यः बलिम् अग्रहीत् सहस्रगुणम् उत्स्रष्टुम् आ दत्ते हि रसम् रविः

**अन्वयार्थः**

- सः– राजा दिलीपः
- प्रजानाम् एव – जनतानां
- भूत्यर्थम् – वृद्ध्यर्थम्
- ताभ्यः – प्रजाभ्यः
- बलिम् – षष्ठांशरूपं करम् (tax)
- अग्रहीत् – गृहीतवान्
- हि रविः – तथाहि सूर्यः
- सहस्रगुणम् – सहस्रधा
- उत्स्रष्टुम् – दातुम्, त्यक्तुम्(उत् + सृज् + तुमुन्)
- रसम् – जलम्
- आदत्ते – गृह्णाति । (आङ् + दा, आत्मनेपदि)

**अन्वयः**

सः प्रजानां भूत्यर्थम् एव ताभ्यः बलिम् अग्रहीत् । रविः सहस्रगुणम् उत्स्रष्टुं रसम् आदत्ते हि ।

**भावः**

यथा रविः स्वकिरणैः पृथ्व्याः जलं आददाति । पुनः सहस्रगुणं जलं प्रददाति, पृथिव्याः धान्यसम्पदं च वर्धयति । तथा सः दिलीपः अपि प्रजाभ्यः परिमितं (limited) करं गृहीत्वा यथेष्टं तेभ्यः सुखसाधनं कल्पयति ।

**समासः वृत्तिश्च**

- भूत्यर्थम् – भूत्यै इदम्, भूत्यर्थम्
- सहस्रगुणम् – सहस्रं गुणाः यस्मिन् (कर्मणि) तत् सहस्रगुणम्

====================================

१९. युक्तिमान् शक्तिमान् दिलीपः

**सेना परिच्छदस्तस्य द्वयमेवार्थसाधनम् ।**
**शास्त्रेष्वकुण्ठिता बुद्धिर्मौर्वी धनुषि चातता ॥ १९ ॥**

**पदच्छेदः**

सेना, परिच्छदः, तस्य, द्वयमेव, अर्थसाधनम्, शास्त्रेषु, अकुण्ठिता, बुद्धिः, मौर्वी, धनुषि, च, आतता ।

**अन्वयार्थः**

- तस्य = दिलीपराजस्य
- सेना = अनीकः, चतुरङ्गबलम् सैन्यम्
- परिच्छदः (आसीत्) । = छत्रचामरादितुल्यम् उपकरणमात्रम् आसीत् ।(just a paraphernalia)
- शास्त्रेषु= आगमेषु, नयशास्त्रे च
- अकुण्ठिता बुद्धिः = अव्याहता बुद्धिः, निर्बाधं व्यापृता बुद्धिः (unfoiled, here penetrated)
- धनुषि = चापे
- आतता मौर्वी च । = आरोपिता ज्या (bow-string) च
- (इति) द्वयम् एव (एतत्) ।= द्वे एव एते (सैन्यादिकमपि अनपेक्ष्य)
- अर्थसाधम् (आसीत्) = प्रयोजनस्य साधने आस्ताम् ।

**अन्वयः**

तस्य सेना परिच्छदः (एव आसीत्) । शास्त्रेषु अकुण्ठिता बुद्धिः च धनुषि आतता मौर्वी च (इति एतत्) द्वयम् एव अर्थसाधम् (आसीत्) ।

**भावः**

कस्यचिदपि राज्ञः महत्त्वपूर्ण-साधनेषु सैन्यं प्रधानम् आद्यं च साधनं भवति । किन्तु दिलीपराजस्य विषये तथा न । तस्य सेना राज्ञः चिन्हरूपम्

उपकरणम् एव । अर्थात् सैन्यमपि छत्रचामरादितुल्यं शोभार्थम् अभूत् । एवं सति, शास्त्रनिष्ठा-बुद्धिः चापे आरोपिता ज्या च इत्येते द्वे एव दिलीपस्य सर्वार्थसाधिके आस्ताम् । शास्त्रपूतं बुद्धिबलं पराक्रमि भुजबलम् च इति साधनद्वये सति साधनान्तरं नापेक्षितवान् दिलीपः इति तात्पर्यम् ।

**समासः वृत्तिश्च**

- परिच्छदः – परिच्छाद्यते अनेन इति परिच्छदः (परि + छद् + णिच् + घ)
- अर्थसाधनम् – अर्थस्य साधनम् – षष्ठीतत्पुरुषः
- अकुण्ठिता
  - कुण्ठिता – कुण्ठ्"कुठि गतिप्रतिघाते" (कुण्ठति) + क्त
  - अकुण्ठिता – न कुण्ठिता – नञ्-तत्पुरुषः
- आतता = आङ् + तन् "तनु विस्तारे" (तनोति) + क्त

=====================================
=====

२०. सामदानभेददण्डादयः उपायाः अप्रकाशिताः इति आह

**तस्य संवृतमन्त्रस्य गूढाकारेङ्गितस्य च ।**
**फलानुमेया प्रारम्भाः संस्काराः प्राक्तना इव ॥ २० ॥**

**पदच्छेदः**

तस्य संवृतमन्त्रस्य गूढाकारेङ्गितस्य च फलानुमेया प्रारम्भाः संस्काराः प्राक्तना इव ।

**अन्वयार्थः**

- संवृतमन्त्रस्य =गुप्तविचारस्य / यस्य मन्त्रिभिः सह कृताः मन्त्रणाः (secret council) इतरैः न ज्ञायन्ते
- गूढाकारेङ्गितस्य च
  - आकारः – मुखभावः, मुखराग-भ्रुकुटिविकारः इत्यादिः व्यक्तेः हृद्गतभावं प्रकाशयति ।
  - इङ्गितम् – चेष्टितम्
  - गूढाकारेङ्गितः- यस्य आकारः इङ्गितं च अप्रकाशितं भवति ।
- तस्य = राज्ञः दिलीपस्य
- प्रारम्भाः = उपक्रमाः / कार्ययोजनाः
- प्राक्तनाः =(कस्यचित् मनुष्यस्य) पूर्वजन्मसु उपार्जिताः
- संस्काराः इव = पूर्वकर्मवासनाः इव
- फलानुमेयाः (आसन्) = परिणामं दृष्ट्वा अनुमातुं योग्याः (आसन्)

**अन्वयः**

संवृतमन्त्रस्य च गूढाकारेङ्गितस्य च तस्य प्रारम्भाः, प्राक्तनाः संस्काराः इव, फलानुमेयाः (आसन्) ।

**भावः**

कटाक्षवीक्षणेन, हस्तसंज्ञया वापि वक्तुः हृदयगतं विकारः ऊहितुं शक्यः । परन्तु दिलीपराजस्य मनोभावः मनोविकारश्च गूढः भवति स्म । इह जन्मनि विहितानां कर्मफलानां कारणं प्रत्यक्षं न ज्ञायते । पूर्वजन्मसु प्राप्ताः संस्काराः इति अनुमानम् एव तत्र प्रमाणम् । एवम् एव राज्ञः दिलीपस्य मन्त्रणाः काः, सामदानभेददण्डादीनाम् उपायानां क्रियान्वयनं कीदृशम् इति गुह्यं भवति स्म । फलोदयस्य अनन्तरम् एव तदनुमातुं शक्यम् आसीत् ।

**समासः वृत्तिश्च**

- संवृतमन्त्रस्य =संवृतः मन्त्रः यस्य सः, तस्य

- गूढाकारेङ्गितस्य
    - आकारः च इङ्गितं च आकारेङ्गिते
    - गूढे आकारेङ्गिते यस्य सः गूढाकारेङ्गिते, तस्य
- फलानुमेया
    - अनुमातुं योग्याः अनुमेयाः
    - फलेन अनुमेयाः फलानुमेया
- इङ्गितम् – इङ्ग् ‘इगिँ गतौ’ (इङ्गति / ते) + क्त
- गुहू “गुहूँ संवरणे” (गूहति /ते) + क्त
- अनु + मा “मा माने” (माति) + यत्

=============================================

२१. दिलीपः निर्भयः, निर्ममः, निराशः इति आह

**जुगोपात्मानमत्रस्तो भेजे धर्ममनातुरः ।**
**अगृध्नुराददे सोऽर्थमसक्तः सुखमन्वभूत् ॥ २१ ॥**
**पदच्छेदः**
जुगोप, आत्मानम्, अत्रस्तः, भेजे, धर्मम्, अनातुरः, अगृध्नुः आददे सः अर्थम् असक्तः सुखम् अन्वभूत् ।

**अन्वयार्थः**

- (सः) = दिलीपः
- अत्रस्तः (सन्)= अभीतः सन्
- आत्मानम् = स्वम्
- जुगोप । = अरक्षत्
- अनातुरः (सन्)= अरुग्णः सन्

- धर्मं भेजे । = सुकृतम् असेवत
- अगृध्नुः (सन्)= अलुब्धः सन्
- अर्थम् = सम्पदम्
- आददे । = स्वीकृतवान्
- असक्तः (सन्)= आसक्तिरहितः सन्
- सुखम्= संसारस्य सुखम्
- अन्वभूत् ।= अनुभूतवान् ।

**अन्वयः**

(सः) अत्रस्तः (सन्) आत्मानम् जुगोप । अनातुरः (सन्) धर्मं भेजे । अगृध्नुः (सन्) अर्थम् आददे । असक्तः (सन्) सुखम् अन्वभूत् ।

**भावः**

धर्मार्थकामाः इति पुरुषार्थसमुच्चयः 'त्रिवर्गः' इत्युच्यते । त्रिवर्गसिद्धेः शरीरम् आद्यं साधनं भवति । पूर्वजन्मनां सुकृत्, वित्तं, विषयोपभोगः इति एतानि पुरुषार्थसिद्धये इतरसाधनानि भवन्ति ।

प्रायः लोके जनाः आपत्सु त्रस्ताः सन्तः कदाचित् भयवशात् अधर्ममार्गेणापि आत्मानं रक्षन्ति, रोगग्रस्ताः सन्तः स्वार्थवशात् धर्मानुष्ठानं कुर्वन्ति, लोभवशात् अर्थसङ्ग्रहं कुर्वन्ति, कामवशात् विषयोपभोगं कुर्वन्ति ।

किन्तु दिलीपः निर्भयः सन् आत्मानम् (शरीरम्) अरक्षत् । निरातङ्कः सन् धर्मपालनमकरोत् । निःस्वार्थतया धनसञ्चयम् अकरोत् । निःस्पृहः सन् संसारस्य सुखम् अनुभूतवान् ।

**समासः वृत्तिश्च**

- अत्रस्तः – न त्रस्तः – नञ्-तत्पुरुषः

- अनातुरः – न आतुरः – नञ्-तत्पुरुषः
- अगृध्नुः – न गृध्नुः – नञ्-तत्पुरुषः
- असक्तः – न सक्तः – नञ्-तत्पुरुषः

**क्रियापदानि**

- जुगोप –गुप् "गुपूँ रक्षणे" (गोपयति) – लिट्
- भेजे – भज् "भजँ सेवायाम्"(भजति / ते) – लिट्
- आददे – आ + दा "डुदाञ् दाने"(ददाति / दत्ते) – लिट्
- अन्वभूत्- अनु + भू "भू सत्तायाम्" (अनुभवति) – लुङ्

========================================
=====

२२. दिलीपस्य गुणसम्पद् –

**ज्ञाने मौनं क्षमा शक्तौ त्यागे श्लाघाविपर्ययः ।**
**गुणा गुणानुबन्धित्वात्तस्य सप्रसवा इव ॥ २२ ॥**
**पदच्छेदः**

ज्ञाने, मौनम्, क्षमा, शक्तौ, त्यागे, श्लाघाविपर्ययः, गुणाः,
गुणानुबन्धित्वात्, तस्य, सप्रसवाः, इव ।

**अन्वयार्थः**

- ज्ञाने मौनम् = परवृत्तान्तज्ञाने सति अपि मौनम्
- शक्तौ क्षमा = प्रतीकारसामर्थ्ये सति अपि अपकारसहनम् ।
- त्यागे श्लाघाविपर्ययः । = दाने सति अपि आत्मप्रशंसायाः अभावः ।
- (इत्थम्)
- तस्य गुणाः = दिपीलस्य गुणाः

- गुणानुबन्धित्वात् = गुणैः सहचारित्वात्, गुणाः गुणैः (सह) अविरोधेन सहजतया वर्तन्ते । तस्मात्
- सप्रसवाः इव =सोदराः इव
- (अभूवन्)

**अन्वयः**

ज्ञाने मौनम्, शक्तौ क्षमा, त्यागे श्लाघाविपर्ययः (इत्थम्) तस्य गुणाः गुणानुबन्धित्वात् सप्रसवाः इव (अभूवन्) ।

**भावः**

- ज्ञाने मौनम् – दिलीपः सदसि वाक्पटुः भवति स्म। किन्तु स्वयम् उपकारं कृत्वा मौनं समाचरति । अन्येन अपकारः कृतः चेदपि मौनं भजति ।
  - "न अस्य उपतापि वचनं मौनं व्रतचरिष्णुता" – कामन्दकीय-नीतिसारः
  - "प्रियं कृत्वा मौनम्", "निरभिभवसाराः परकथाः" –७७, नीतिशतकम्, भर्तृहरिः
  - सन्मित्रं"गुह्यं निगूहति, गुणान् प्रकटीकरोति" – ६५, नीतिशतकम्, भर्तृहरिः
- शक्तौ क्षमा – अत्यन्तं शक्तिमान् । किन्तु स्वशक्तेः दुष्प्रयोगं नैव करोति स्म ।
  - "प्रभवितुः क्षमा भूषणम्" – ८०, नीतिशतकम्, भर्तृहरिः
- त्यागे श्लाघाविपर्ययः – आत्मख्यापनाय वा प्रत्युपकारेच्छया वा दानं न करोति स्म ।
  - दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ।
    देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम् ॥ १७/२० भ.गी.

- तस्य गुणाः गुणानुबन्धित्वात् सप्रसवाः इव (अभूवन्) – करे विरुद्धाकाराः पञ्चाङ्गुल्यः एकत्र यथा,गृहे विरुद्धगुणैः युक्ताः सोदराः एकत्र यथा भवन्ति, तथा विरुद्धाः अपि गुणाः दिलीपे अविरोधेन एव स्थिताः शोभन्ते ।

**समासः वृतिश्च**

- श्लाघाविपर्ययः – श्लाघायाः विपर्ययः -षष्ठीतत्पुरुषः
- गुणानुबन्धित्वात्
    - अनुबन्धिनः – अनुबध्नन्ति इति
    - अनुबन्धित्वम् – अनुबन्धिनां भावः
    - गुणानुबन्धित्वात् -गुणैः अनुबन्धित्वम् – तृतीयातत्पुरुषः
- सप्रसवाः – सह प्रसवः येषां ते – बहुव्रीहिः

==========================================

२३. वैराग्यशीलः ज्ञानसम्पन्नः दिलीपः ज्ञानवृद्धः आसीत्

**अनाकृष्टस्य विषयैर्विद्यानां पारदृश्वनः ।**
**तस्य धर्मरतेरासीद् वृद्धत्वं जरसा विना ॥ २३ ॥**

**पदच्छेदः**

अनाकृष्टस्य, विषयैः, विद्यानाम्, पारदृश्वनः, तस्य, धर्मरतेः, आसीत्, वृद्धत्वम्, जरसा, विना ।

**अन्वयार्थः**

- विषयैः अनाकृष्टस्य – शब्द-स्पर्श-रूप-रस-गन्धाः एते विषयाः । एतैः अवशीकृतः, तस्य
- विद्यानां पारदृश्वनः – यः वेदवेदाङ्गादीनाम् अन्तं दृष्टवान्, तस्य

- धर्मरतेः – धर्मानुरागिणः
- तस्य – दिलीपराजस्य
- जरसा विना – वृद्धावस्थाम् अप्राप्य अपि
- वृद्धत्वम्- शीलवृद्धत्वम्, ज्ञानवृद्धत्वम्
- आसीत् । – अवर्तत

**अन्वयः**

विषयैः अनाकृष्टस्य, विद्यानां पारदृश्वनः, धर्मरतेः तस्य जरसा विना वृद्धत्वम् आसीत् ।

**भावः**

- दिलीपः विषयसुखैः अलिप्तः आसीत् । जितेन्द्रियः सः वैराग्यशीलः आसीत् ।
    - शास्त्राध्ययने १४ विद्यास्थानानि भवन्ति । (४ + ४ + ६) ।४ वेदाः । ४ उपवेदाः – धनुर्वेदः आयुर्वेदः गन्धर्ववेदः अर्थशास्त्रं च । ६ वेदाङ्गानि – शिक्षा, व्याकरणं, छन्दः, ज्यौतिषम्, निरुक्तम्, कल्पः च ।
    - ब्रह्मचर्याश्रमे अभ्यस्तविद्यः दिलीपः ज्ञानसम्पन्नः आसीत् ।
- वेदज्ञानं तस्य कर्मणाम् आधारः आसीत्, तेजोवीर्यसत्यदयाक्षमादिगुणाः तस्य कर्मणां पोषकाः आसन्, वैराग्यशीलत्वं कामक्रोदादिभ्यः तम्अरक्षत् । धर्मचिन्तने निरतः दिलीपः बुद्धेः पक्वतायाः दृष्ट्या युवा सन् अपि वृद्धः आसीत् इत्यर्थः ।
    - 'न धर्मवृद्धेषु वयः समीक्ष्यते।' – ५/ १६कुमारसम्भवम् ।
    - न तेन वृद्धो भवति येनास्य पलितं शिरः ।<br>यो वा युवाप्यधीयानस्तं देवाः स्थविरं विदुः ॥ — २/१५६ मनुस्मृतिः(धर्मसामान्यलक्षणम्)

**समासः वृत्तिश्च**

- न आकृष्टः – अनाकृष्टः, नञ्-तत्पुरुषः
- पारदृश्वनः – पारं दृष्टवान् इति पारदृश्वा, तस्य
- धर्मरतेः – धर्मे रतिः यस्य सः धर्मरतिः, तस्य
- वृद्धत्वम् – वृद्धस्य भावः – वृद्ध+ त्व तद्धितप्रत्ययः
- पारदृश्वनः – (विद्यानां) पारम् (अन्तम्) दृष्टवान् इति – दृश् + क्वनिप्प्रत्ययः

========================================

२४. प्रजावत्सलः दिलीपराजः

**प्रजानां विनयाधानाद्रक्षणाद्भरणादपि ।**
**स पिता पितरस्तासां केवलं जन्महेतवः ॥ २४ ॥**

**पदच्छेदः**

प्रजानाम्, विनयाधानात्, रक्षणात्, भरणात्, अपि, सः, पिता, पितरः, तासाम्, केवलम्, जन्महेतवः ।

**अन्वयार्थः**

- प्रजानाम् = जनानां
- विनयाधानात् = सन्मार्गे प्रवर्तनात्
- रक्षणात् =विपत्तिनिवारणात् चौर्यादिभ्यः त्राणनात्
- भरणात् अपि = पोषणात्
- सः पिता (अभूत्) = दिलीपराजः प्रजनां पालकः अभवत्
- तासां पितरः (तु) = जनानां जन्मदातारः
- केवलं जन्महेतवः = नाममात्राः पितरः (पालकाः) आसन्

**अन्वयः**

प्रजानाम् विनयाधानात् रक्षणात् भरणात् अपि सः प्रजानाम् पिता (अभूत्) । तासाम् पितरः केवलं जन्महेतवः ।

**भावः**

- पाति रक्षति अपत्यम् इति पिता । पिता पदे-पदे सन्ततिं शिक्षयन् तेस्य दोषान् परिहरन् च वियादाता भवति । रोगादिभयहेतून् निवारयन् भयत्राता भवति । अन्नपानादीनि उपार्जयन् अपत्यस्य पोषकः भवति । प्रजावत्सलः राजा दिलीपः प्रजानां शिक्षण-रक्षण-भरण-कार्याणि पितृवत् निर्वहति स्म इत्यतः *पितरः तासां जन्ममात्रस्य कर्तारः सन्तः स्वसन्ततिं प्रति इतरदायित्वेभ्यः चिन्तामुक्ताः अभवन् इत्यर्थः ।
  - *अन्नदाता भयत्राता विद्यादाता तथैव च
    जनिता चोपनेता च पञ्चैते पितरः स्मृताः ॥

**समासः/ वृत्तिश्च**

- विनयाधानात् – विनयस्य आधानम्, विनयाधानम्, तस्मात्
- जन्महेतवः – जन्मनः हेतवः

========================================
====

२५. धर्माविरुद्धौ तस्य अर्थकामौ

**स्थित्यै दण्डयतो दण्ड्यान्परिणेतुः प्रसूतये ।**
**अप्यर्थकामौ तस्यास्तां धर्म एव मनीषिणः ॥ २५ ॥**

**पदच्छेदः**

स्थित्यै, दण्डयतः, दण्ड्यान्, परिणेतुः, प्रसूतये, अपि, अर्थकामौ, तस्य, आस्ताम्, धर्मः, एव, मनीषिणः ।

**अन्वयार्थः**

- स्थित्यै – लोकरक्षणाय
- दण्ड्यान् – अपराधिनः एव, निरपराधिनः न कदापि
- दण्डयतः– दण्डयन् शासनं करोति स्म ।
- प्रसूतये – सन्तानप्राप्त्यै एव
- परिणेतुः– गृहस्थाश्रमं प्रविष्टवतः
- मनीषिणः – धीरस्य
- तस्य – दिलीपराजस्य
- अर्थकामौ अपि – वित्तसङ्ग्रहः च विषयाभिलाषः च इति पुरुषार्थौ अपि
- धर्मः एव आस्ताम् । – धर्मशेषतां प्राप्तौ ।

**अन्वयः**

स्थित्यै दण्ड्यान् दण्डयतः (तस्य), प्रसूतये परिणेतुः,
मनीषिणः, तस्य अर्थकामौ अपि, धर्मः एव, आस्ताम् ।

**भावः**

- शिष्टरक्षणं दुष्टशिक्षणं च क्षात्रधर्मः भवति । तदनुसारेण दिलीपचक्रवर्ती लोकरक्षणाय अपराधिषु यथापराधं *दण्डविधानं अकरोत् । वंशवर्धनाय सन्तानकामना इति राजकुलोचितं धर्मं पालयितुकामः सः **विवाहसंस्कार-सम्पन्नः जातः । सः ***धर्मचरणार्थम् एव अर्थकामौ उपसेवते इत्यतः अर्थः च कामः च तस्य श्रेयोमार्गे साधकौ एव आस्तां न हि बाधकौ इति तात्पर्यम् ।
  - *यथापराधदण्डानां रघूणाम् अन्वयं वक्ष्ये (श्लो. ५)
  - *अदण्ड्यान् दण्डयन् राजा दण्ड्यांश्चैवाप्यदण्डयन् ।
    यशो महदाप्नोति नरकं चैव गच्छति ॥ ८/१२८ ॥ व्यवहारनीतिः, मनुस्मृतिः ।

- **प्रजायै गृहमेधिनां रघूणाम् अन्वयं वक्ष्ये (श्लो. ६)
- ***बलं बलवतां चाहं कामरागविवर्जितम् ।
  धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ ॥ श्रीमद्भगवद्गीता ७/११

**समासः वृत्तिश्च**

- दण्ड्यान् – दण्डम् अर्हन्ति इति दण्ड्याः, तान्
- अदण्डयन् – न द्ण्डयन्- दण्ड् “दण्ड् दण्डनिपातने” + शतृ प्रत्ययः
- मनीषिणः
  - मनसः ईषा – मनीषा
  - मनीषा अस्य अस्ति इति मनीषी, तस्य (मतुबर्थे इनिप्रत्ययः)
- अर्थकामौ – अर्थश्च कामश्च- इतरेतरद्वन्द्वः

२६. नरेन्द्र-देवेन्द्रयोः सौहार्दं श्रेयसे अभवत् –

**दुदोह गां स यज्ञाय सस्याय मघवा दिवम् ।**
**सम्पद्विनिमयेनोभौ दधतुर्भुवनद्वयम् ॥ २६ ॥**

**पदच्छेदः**

दुदोह, गाम्, सः, यज्ञाय, सस्याय, मघवा, दिवम्, सम्पद्विनिमयेन, उभौ, दधतुः, भुवनद्वयम् ।

**आकाङ्क्षाक्रमः**

- दुदोह
  - कः दुदोह? सः
  - कां दुदोह? गाम
  - किमर्थंदुदोह ? यज्ञाय
  - पुनः कः दुदोह ?मघवा
  - कां दुदोह? दिवम्

- किमर्थंदुदोह ? सस्याय
- दधतुः ।
    - कौदधतुः ? उभौ
    - किं दधतुः ?भुवनद्वयम्
    - कथं दधतुः ?सम्पद्विनिमयेन

**अन्वयार्थः**

- सः= राजा दिलीपः
- यज्ञाय = यागं कर्तुम्
- गाम् = पृथिवीम्
- दुदोह = अधोग् (दोहनम् अकरोत्)
- मघवा = इन्द्रः
- सस्याय = धान्यं वर्धयितुम्
- दिवम् = स्वर्गम्
- (दुदोह) ।
- (एवं)
- उभौ = नरेन्द्र-देवेन्द्रौ
- सम्पद्-विनिमयेन = यज्ञस्य च वृष्टेः च आदानप्रदानेन
- भुवनद्वयम् = दिवं च भुवं च
- दधतुः = पुपुषतुः / अपोषताम् ।

**अन्वयः**

सः यज्ञाय गां दुदोह, मघवा सस्याय दिवं (दुदोह) । (एवं) उभौ सम्पद्-विनिमयेन भुवनद्वयं दधतुः ।

**भावः**

दिलीपस्य साम्राज्ये प्रजाभ्यः करं गृहीत्वा भूम्याः यज्ञसाधनानि च सङ्गृह्य यथाविधि यज्ञाः समायोज्यन्ते स्म । राजा इत्थम् इन्द्रलोकं च अपोषत् । इन्द्रोऽपि तुष्टः सन् वृष्टिदानेन भूलोकस्य धान्यसम्पदम् अवर्धयत।

Notes:

"यथाविधि हुताग्नीनाम् ......रघूणाम् अन्वयं वक्ष्ये" (श्लो.६)

"राजा अर्थान् समाहृत्य इन्द्रमहोत्सवं कुर्यात् (इन्द्रं प्रीणयेत्) । प्रीणितः मेघवाहः महतीं वृष्टिम् आवहेत्" इति दण्डनीतिः बोधयति ।

श्रीमद्भगवद्गीतायाम् **यज्ञस्य** विषये विस्तरेण भगवता उक्तम् –
**यज्ञस्य प्रयोजनम् इष्टप्राप्तिः** –
सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः ।
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥ ३.१०

श्लोकार्थः – पुरा सृष्टिकर्ता यज्ञसामग्र्याः सहिताः प्रजाः सृष्ट्वा उवाच – भवन्तः एतेन **यज्ञेन वृद्धिं** प्राप्नुवन्तु । एषः यज्ञः भवताम् **अभीष्टदायकः** अस्तु ।
**यज्ञस्य हेतुः कर्म**
अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसम्भवः ।
यज्ञाद्भवति पर्जन्यः यज्ञः **कर्मसमुद्भवः** ॥ ३.१४
**कर्म** –> **यज्ञः** –> **पर्जन्यः** –> **अन्नम्** –> **भूतानि**
**यज्ञस्य फलदातारः देवाः** –

देवान्भावयतानेन ते देवा भावयन्तु वः ।
परस्परं भावयन्तः **श्रेयः परमवाप्स्यथ** ॥ ३.११॥
इष्टान्भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः । ३.१२
श्लोकार्थः – मानवाः देवान् यागादिना प्रीणयन्तु । देवाः मानवान् वृष्ट्यादिभिः तोषयन्तु । एवं परस्परं सम्पदः आदानप्रदानेन भूलोकः देवलोकः च इति उभौ अपि संवर्धेताम् ।

**क्रियापदम्**

दुह् "दुह् प्रपूरणे" दोग्धि दुग्धः दुहन्ति – लट् । दुदोह दुदुहतुः दुदुहुः – लङ्

**समासः वृत्तिश्च**

सम्पद्विनिमयेन – सम्पदः विनिमयः, तेन – षष्ठीतत्पुरुषः

====================================

**२७**. अघृष्यः दिलीपचक्रवर्ती –

**न किलानुययुस्तस्य राजानो रक्षितुर्यशः ॥**
**व्यावृत्ता यत्परस्वेभ्यः श्रुतौ तस्करता स्थिता ॥ २७ ॥**

**पदच्छेदः**

न, किल, अनुययुः, तस्य, राजानः, रक्षितुः, यशः, व्यावृत्ता, यत्, परस्वेभ्यः, श्रुतौ, तस्करता, स्थिता ।

**आकाङ्क्षाक्रमः**

- न अनुययुः ।
  - के? राजानः
  - किं न अनुययुः ?यशः
    - कस्य ?तस्य

- कीदृशस्य ?रक्षितुः
  - यत् (यस्मात्)?
- स्थिता
  - का? तस्करता
  - कीदृशी सती? व्यावृत्ता
    - केभ्यः ?परस्वेभ्यः
  - कुत्र स्थिता ?श्रुतौ

**पदार्थः**

- राजानः = अन्ये नृपाः
- रक्षितुः = भयेभ्यः त्रातुः
- तस्य = दिलीपराजस्य
- यशः = कीर्तिम्
- न अनुययुः किल = न अनुकृतवन्तः (तादृशं यशः न प्राप्तवन्तः)
- यत् = यस्मात्
- तस्करता = चौर्यम्
- परस्वेभ्यः = परधनेभ्यः (स्वम् = धनम्)
- व्यावृत्ता (सती) = निवृत्ता(having turned away)
- श्रुतौ स्थिता = कर्णे स्थिता ।

**अन्वयः**

राजानः रक्षितुः तस्य यशः न अनुययुः । यत् तस्करता परस्वेभ्यः व्यावृत्ता (सती) श्रुतौ स्थिता ।

**भावः**

राजा दिलीपः प्रजाः अशिक्षयत् अरक्षत् च । तस्करादीन् (चोरादीन्) दण्ड्यान् अदण्डयत् च । अत एव राज्ये सज्जनाः भयमुक्ताः सन्तः स्वकर्मसु

प्रवर्तन्ते स्म किन्तु दुष्टाः दण्डभयात् अपराधेभ्यः निवृत्ताः आसन् । अनेन राज्ञः यशः अतुल्यमासीत् । को वा नृपः एतादृशेन सुशासकेन स्पर्धितुं प्रभवति?

अन्ये नृपाः दिलीपस्य अनुकरणं नाकुर्वन्, तत्तुल्यां कीर्तिं नाप्नुवन् इत्यर्थः । 'तस्करता' अर्थात् परधनापहरणरूपं कर्म यथार्थतः अदृश्यतां प्राप्तं सत् ध्वनिमात्रे स्थिम् आसीत् इत्यर्थः ।

**समासः/ वृत्तिश्च**

- तस्करता – तस्करस्य भावः
- परस्वेभ्यः – परेषां स्वानि – परस्वानि, तेभ्यः

====================================

२८. रागद्वेषाभ्यां मुक्तः दिलीपराजः

**द्वेष्योऽपि सम्मतः शिष्टस्तस्यार्तस्य यथौषधम् ।**
**त्याज्यो दुष्टः प्रियोऽप्यासीदङ्गुलीवोरगक्षता ॥ २८ ॥**

**पदच्छेदः**

द्वेष्यः, अपि, सम्मतः, शिष्टः, तस्य, आर्तस्य, यथा, औषधम्, त्याज्यः, दुष्टः, प्रियः, अपि, आसीत्, अङ्गुली, इव, उरगक्षता ।

**अन्वयार्थः**

- शिष्टः = सज्जनः
- द्वेष्यः (चेत्) अपि = शत्रुः अपि
- यथा आर्तस्य = यथा रुग्णस्य
- औषधम् = भेषजम्
- सम्मतः = अनुमतः आसीत् ।

- दुष्टः = दुर्जनः
- प्रियः (चेत्) अपि = प्रेमास्पदीभूतोऽपि / मित्रबन्धू
- उरगक्षता = सर्पदष्टा
- अङ्गुली इव = करशाखा इव
- त्याज्यः = परिहार्यः आसीत्।

**अन्वयः**

यथा आर्तस्य औषधं, शिष्टः, द्वेष्यः (चेत्) अपि, तस्य सम्मतः ।
उरगक्षता अङ्गुली इव, दुष्टः प्रियः (चेत्) अपि, तस्य त्याज्यः आसीत् ।

**भावः**

यथा कश्चन बुद्धिमान् देहस्य हिताय अप्रियम् औषधं सेवते । किन्तु यदि तस्य अङ्गुली सर्पेण दष्टा तर्हि निजाङ्गुल्याः छेदनाय अपि सज्जः भवति ।

'दुर्जनः चेदपि अयं मम बन्धुः अतः तस्मिन् स्निह्यामि, सुजनः चेदपि सः शत्रुः अतः तस्मै द्वेष्मि' इति राज्ञः मतिः न । तस्य शिष्टः एव बन्धुः, दुष्टः एव शत्रुः इत्यर्थः । यथा बुद्धिमान् देहस्य हिताय अप्रियम् औषधं सेवते। किन्तु प्रियां निजाङ्गुलीम् अपि छिनत्ति यदि सा सर्पदष्टा भवति ।

**समासः वृत्तिश्च**

- द्वेष्यः – द्वेष्टुं योग्यः
- त्याज्यः – त्यक्तुं योग्यः
- उरगक्षता – उरगेण क्षता – तृतीयातत्पुरुषः

**व्युत्पत्तिः**

- उरसा गच्छति इति – उरगः

२९. परोपकारी दिलीपः –

**तं वेधा विदधे नूनं महाभूतसमाधिना ।**

**तथा हि सर्वे तस्यासन्परार्थैकफला गुणाः ॥ २९ ॥**

**पदच्छेदः**

तम्, वेधाः, विदधे, नूनम्, महाभूतसमाधिना, तथा, हि, सर्वे, तस्य, आसन्, परार्थैकफलाः गुणाः ।

**आकाङ्क्षाक्रमः**

- विदधे ।
- कः? वेधाः विदधे
- कम् ?तम्
- कथम् ?महाभूतसमाधिना
- हि
- आसन् ।
- के? गुणाः
- कीदृशाः? परार्थैकफलाः
- पुनः कीदृशाः? सर्वे
- कस्य? तस्य

**अन्वयार्थः**

- विदधे – असृजत्
- महाभूतसमाधिः – प्रजापतिः

**अन्वयः**

वेधाः तं महाभूतसमाधिना विदधे नूनं, तथा हि तस्य सर्वे गुणाः परार्थैकफलाः आसन् ।

**भावार्थः**

प्रजापतिः यया कारण-सामग्र्या पञ्च-भूतानि सृष्टवान् तया एव कारण-सामग्रया दिलीपमपि रचितवान् नूनम् । शब्दस्पर्शादयः कारणगुणाः जगद्धिताय एव भवन्ति तथैव दिलीपस्य औदार्य-दयादि-गुणाः स्वार्थलेशं विना परार्थाय एव आसन् ।

**अलङ्कारः**

उत्प्रेक्षालङ्कारः – यत्र उपमेयस्य सम्भावना उपमानरूपे क्रियते ।

=========================================
=

३०. आसमुद्रक्षितीशः दिलीपचक्रवर्ती

**स वेलावप्रवलयां परिखीकृतसागराम् ।**
**अनन्यशासनामुर्वीं शशासैकपुरीमिव ॥ ३० ॥**

**पदच्छेदः**

सः, वेलावप्रवलयाम्, परिखीकृतसागराम्, अनन्यशासनाम्, उर्वीम्, शशास, एकपुरीम् इव ।

**आकाङ्क्षाक्रमः**

- शशास
- कः ?सः
- काम् ?उर्वीम्
- कीदृशीम् ?वेलावप्रवलयां परिखीकृतसागराम् अनन्यशासनाम्

**अन्वयार्थः**

- सः = दिलीपचक्रवर्ती

- “The earth is having the shores of the seas for its line of ramparts(wall around the castle) and the seas themselves for its moats (deep pit around the castle)”
- वेला-वप्र-वलयाम्
  - वेलाः = समुद्रकूलानि
  - वप्रम् = (Barrier) दुर्गनगरपक्षेदुर्गं परितः स्थिता वृतिः इव उन्नतः मृत्तिकास्तूपः ।
  - **वलय**= The presence of the word **वलय** which usually means “a bracelet”, in **वेलावप्रवलयाम्** suggests a side-meaning. The earth is the spouse of the king who wears a bracelet in the shape of the **वेला**, a waist-zone in the form of the sea, and who is solely obedient to her husband’s will.
  - वेलावप्रवलयाम्= समुद्रतटाः एव यस्याः प्राकाराः, तादृशीं । समुद्रकूलानि एव भूमेः प्राकारवेष्टनानि ।
- परिखीकृतसागराम्
  - परिखा =(ditch) दुर्गवेष्टनम् । वप्रात् बहिः गभीरः खातः परिखा इत्युच्यते । अस्यां परिखायां जलं भवति, जलजन्तवः मकरादयः भवन्ति ।
  - परिखीकृतसागराम् = समुद्रःएव राज्यदुर्गस्स्य परिखा । तादृशीम् (उर्वीम्)
- अनन्यशासनाम् = दिलीपात् ऋते अन्यः शासकाः न आसन् यस्याः तादृशीं
- उर्वीम्= भूमिम्
- एकपुरीम् इव = एकनगरम् इव

- शशास = शासितवान्

**अन्वयः**

सः, वेलावप्रवलयाम् परिखीकृतसागराम् अनन्यशासनाम् उर्वीम्, एकपुरीम् इव, शशास ।

**भावः**

कश्चित् राजा दुर्गप्राकारयुक्तं स्वकीयं लघुराज्यं विना क्लेशं रक्षति तथा

दिलीपचक्रवर्ती अप्रतिद्वन्द्वः अनायासेन एव आसमुद्रक्षितीशः सन् शासितवान् ।

**समासः वृत्तिश्च**

- वप्रवलया- वप्र एव वलया – अवधारण-पूर्वपद-कर्मधारयः
- परिखीकृतसागराम्
  - परिखा -परितः (surrounding) खातम् (ditch)
  - परिखीकृताः – अपरिखाः परिखाः सम्पद्यमानाः
  - परिखीकृतसागराम्- परिखीकृताः सागराः यस्याः सा परिखीकृतसागरा, ताम्

========================================

३१. दिलीपराजस्य पत्नी सुदक्षिणा –

**तस्य दाक्षिण्यरूढेन नाम्ना मगधवंशजा ।**
**पत्नी सुदक्षिणेत्यासीदध्वरस्येव दक्षिणा ॥ ३१ ॥**

**पदच्छेदः**

तस्य, दाक्षिण्यरूढेन, नाम्ना, मगधवंशजा, पत्नी, सुदक्षिणा, इति, आसीत्, अध्वरस्य, इव, दक्षिणा ।

**आकाङ्क्षाक्रमः**

- आसीत्
- का? पत्नी
- कीदृशी सा ? मगधवंशजा
- केन नाम्ना रूढा (प्रसिद्धा) ?सुदक्षिणा इति दाक्षिण्यरूढेन
- का इव आसीत् ?अध्वरस्य दक्षिणा इव

**अन्वयार्थः**

- तस्य = राज्ञः दिलीपस्य
- मगधवंशजा = मगधवंशे जाता
- सुदक्षिणा इति दाक्षिण्यरूढेन = (सुदक्षिणा इति) भर्तुः चित्तानुवर्तनं दाक्षिण्यम्, तेन रूढेन (प्रसिद्धेन),
- नाम्ना = अभिधानेन(सुदक्षिणा पत्युः चित्तानुवर्तिनी । अतः अन्वर्थनामवती इत्यर्थः)
- अध्वरस्य दक्षिणा इव = यज्ञस्य पत्नी इव
- आसीत् = बभूव ।

**अन्वयः**

अध्वरस्य दक्षिणा इव, मगधवंशजा, दाक्षिण्यरूढेन सुदक्षिणा इति नाम्ना, तस्य पत्नी आसीत् ।

**भावार्थः**

- दिलीपस्य भार्या मगधवंशोत्पन्ना । सुदक्षिणा तस्याः नाम ।
- सा उदारा, भर्तुः चित्तानुवर्तिनी अतः तस्यां दाक्षिण्यगुणः आसीत् । अतः सा अन्वर्थ-नामवती(यस्याः नाम तस्याः गुणं अनुवर्तयति) ।

- यया विना सर्वकर्म निष्फलं भवति, तादृशा, सर्वस्य पूजिता, यज्ञपत्नी इव सुदक्षिणा आसीत् ।

**व्युत्पत्तिः**

- अध्वरः- अध्वानं (स्वर्गमार्गं) राति (ददाति) इति ।

========================================

३२. सहधर्मानुचारिणी सुदक्षिणा –

**कलत्रवन्तमात्मानमवरोधे महत्यपि ।**
**तया मेने मनस्विन्या लक्ष्म्या च वसुधाधिपः ॥ ३२ ॥**

**पदच्छेदः**

कलत्रवन्तम्, आत्मानम्, अवरोधे, महति, अपि, तया, मेने, मनस्विन्या, लक्ष्म्या, च, वसुधाधिपः ।

**आकाङ्क्षाक्रमः**

- मेने ।
- कः? वसुधाधिपः
- कं मेने ?आत्मानम्
- कीदृशं मेने ?कलत्रवन्तम्
- कया? तया
- कीदृश्या तया ?मनस्विन्या
- कस्मिन् सति (अपि)? महति अपि
- कया च ?लक्ष्म्या

**अन्वयार्थः**

- वसुधाधिपः = भूपालकः
- अवरोधे महति (सति) अपि = अन्तःपुरवर्गे बहुसङ्ख्याके सति अपि

- मनस्विन्या तया = दृढचित्तया (पतिचित्तनुवृत्त्यादिगुणवत्या) सुदक्षिण्या
- लक्ष्म्या च = राज्यश्रिया च
- आत्मानम् = स्वम्
- कलत्रवन्तम् = भार्यावन्तम्
- मेने = अमन्यत

**अन्वयः**

वसुधाधिपः, अवरोधे महति अपि, तया मनस्विन्या, लक्ष्म्या च, आत्मानं कलत्रवन्तं मेने ।

**भावार्थः**

- अवरोधे महति अपि = बहुवल्लभाः राजानः ।
- वसुधाधिपः = राज्ञाः सुदक्षिणायाः पतिः । राज्यलक्ष्म्याः च पालकः इति ।पदप्रयोगस्य औचित्यम् अत्र ।
- प्रशस्तं मनः अस्याः अस्ति इति मनस्विनी ।

=====================================

३३. – पुत्राभिलाषी दिलीपः –

**तस्यामात्मानुरूपायामात्मजन्मसमुत्सुकः ।**
**विलम्बितफलैः कालं स निनाय मनोरथैः ॥ ३३ ॥**

**पदच्छेदः**

तस्याम्, आत्मानुरूपायाम्, आत्मजन्मसमुत्सुकः, विलम्बितफलैः, कालम्, सः, निनाय, मनोरथैः।

**अन्वयार्थः**

- सः = दिलीपः
- आत्मानुरूपायां तस्याम् = स्वस्य सदृश्यां सुदक्षिणायाम्
- आत्मजन्मसमुत्सुकः (सन्) = आत्मजन्मा (पुत्रः), तस्मिन् उत्कण्ठितः
- विलम्बितफलैः मनोरथैः = 'कदा मे पुत्रो भविष्यति' इति आशया
- कालं निनाय = समयं यापयामास ।

**अन्वयः**

सः आत्मानुरूपायां तस्याम् आत्मजन्मसमुत्सुकः (सन्) विलम्बितफलैः मनोरथैः कालं निनाय।

**भावार्थः**

'आत्मा वै जायते पुत्रः' इति श्रुतिवाक्यम् । स्वस्य मनोऽनुकूलायां भार्यायां सुदक्षिणायां पुत्रोत्पत्तिः कदा नु भवति इति प्रतीक्षया च कुतः एतावान् विलम्बः इति चिन्तया च राजा दिलीपः दिनानि यापितवान् ।

**समासः वृत्तिश्च**

- आत्मानुरूपायाम् – आत्मनः अनुरूपा – आत्मानुरूपा, तस्याम्
- आत्मजन्मसमुत्सुकः
  - आत्मजन्मा = आत्मनः जन्म यस्य असौ (सः) आत्मजन्मा
  - आत्मजन्मसमुत्सुकः = आत्मजन्मनि समुत्सुकः
- विलम्बितफलैः – विलम्बितं फलं येषां ते- विलम्बितफलाः, तैः
- मनोरथैः – मनसः रथाः इव – मनोरथाः, तैः

========================================
=

३४. – पुत्रप्राप्त्यै अनुष्ठानम् –

**सन्तानार्थाय विधये स्वभुजादवतारिता ।**
**तेन धूर्जगतो गुर्वी सचिवेषु निचिक्षिपे ॥ ३४ ॥**

**पदच्छेदः**

सन्तानार्थाय विधये स्वभुजात् अवतारिता तेन धूः जगतः गुर्वी सचिवेषु निचिक्षिपे ।

**अन्वयार्थः**

- सन्तानार्थाय विधये = पुत्रप्राप्त्यर्थम् अनुष्ठानं कर्तुम्
- स्वभुजात् अवतारिता = निजबाहोः अवरोपिता
- जगतः = लोकस्य
- गुर्वी धूः = (प्रजपालनरूपः) दुर्भरः कार्यभारः
- तेन = चक्रवर्तिना दिलीपेन
- सचिवेषु = मन्त्रिषु
- निचिक्षिपे = स्थापिता / निहिता ।

**अन्वयः**

सन्तानार्थाय विधये स्वभुजात् अवतारिता जगतः गुर्वी धूः तेन सचिवेषु निचिक्षिपे ।

**भावार्थः**

सन्तानलाभाय करणीये अनुष्ठाने विलम्बः न कार्यः, तदर्थं गुरोः वसिष्ठमुनेः उपदेशः प्राप्तव्यः इति निश्चितवान् दिलीपराजः । अतः सः पृथ्वीपालनरूपं महान्तं भारं कञ्चित् कालं यावत् मन्त्र्यमात्येषु निक्षिप्तवान् ।

**समासः वृत्तिश्च**

- सन्तानार्थाय = सन्तानः अर्थः (प्रयोजनं) यस्य सः – सन्तानार्थः, तस्मै

- स्वभुजात् = स्वस्य भुजः – स्वभुजः, तस्मात्

=====================================
=

३५. – दम्पत्योराश्रमगमनम् –

**अथाभ्यर्च्य विधातारं प्रयतौ पुत्रकाम्यया ।**
**तौ दम्पती वसिष्ठस्य गुरोर्जग्मतुराश्रमम् ॥ ३५ ॥**

**पदच्छेदः**

अथ, अभ्यर्च्य, विधातारम्, प्रयतौ, पुत्रकाम्यया, तौ, दम्पती, वसिष्ठस्य, गुरोः, जग्मतुः, आश्रमम् ।

**अन्वयार्थः**

- अथ = मन्त्रिषु राज्यभारस्थापनानन्तरम्
- पुत्रकाम्यया = पुत्रेच्छया
- प्रयतौ तौ दम्पती = पूतौ तौ सुदक्षिणादिलीपौ
- विधातारम् = ब्रह्माणम् ("स खलु पुत्रार्थिभिः उपास्यते ।")
- अभ्यर्च्य = सम्पूज्य
- गुरोः वसिष्ठस्य आश्रमम् = कुलगुरोः वासस्थानम्
- जग्मतुः = ययतुः, गतवन्तौ

**अन्वयः**

अथ पुत्रकाम्यया प्रयतौ तौ दम्पती विधातारम् अभ्यर्च्य गुरोः वसिष्ठस्य आश्रमं जग्मतुः ।

**भावार्थः**

सचिवान् राज्यप्रशासनकार्ये नियोज्य पुत्रप्राप्त्यभिलाषेण तदुपायं ज्ञातुं च तौ राजदम्पती ब्रह्माणं सम्पूज्य स्वकुलगुरोः वसिष्ठमहर्षेः तपोवनं प्रति प्रस्थितौ ।

**समासः वृत्तिश्च**

- पुत्रकाम्यया
    - आत्मनः पुत्रम् इच्छति इति पुत्रकाम्यति
    - पुत्रकाम्यतीति पुत्रकाम्या, तया (काम्यच् प्रत्ययः)
- दम्पती = जाया च पतिश्च दम्पती (जायाशब्दस्य दम् इति आदेशः)
- विधातारम् = विदधाति इति विधाता, तम्

======================================
==

३६. – दम्पत्योराश्रमगमनम् –

**स्निग्धगम्भीरनिर्घोषमेकं स्यन्दनमास्थितौ ।**
**प्रावृषेण्यं पयोवाहं विद्युदैरावताविव ॥ ३६ ॥**

**पदच्छेदः**

स्निग्धगम्भीरनिर्घोषम्, एकम्, स्यन्दनम्, आस्थितौ, प्रावृषेण्यम्, पयोवाहम्, विद्युदैरावतौ, इव ।

**अन्वयार्थः**

- स्निग्धगम्भीरनिर्घोषम् = मधुरः गम्भीरः ध्वनिः यस्य तम् (रथम् / मेघम्)
- एकं स्यन्दम् = रथम्
- प्रावृषेण्यं पयोवाहम् = वर्षाकालीनमेघम् इव

- विद्युदैरावतौ इव = तडिदभ्रमातङ्गौ इव
- आस्थितौ = आरूढौ
- (तौ जग्मतुः) = ययतुः, गतवन्तौ

**अन्वयः**

स्निग्धगम्भीरनिर्घोषम् एकं स्यन्दनं, प्रावृषेण्यं पयोवाहं विद्युदैरावतौ इव आस्थितौ तौ जग्मतुः।

**भावार्थः**

मेघः इव मधुरं गम्भीरं ध्वनिम् (निर्ह्लादम्) उत्पादयन् सः रथः प्रयाति । मेघे यथा विद्युत् च ऐरावतः च आरूढौ भवतः तथा रथेऽस्मिन् सुदक्षिणादिलीपौ आसीनौ (सन्तौ) वसिष्ठमहर्षेः तपोवनं प्रति प्रस्थितौ ।

**समासः वृत्तिश्च**

- स्निग्धगम्भीरनिर्घोषम्
  - स्निग्धश्च असौ गम्भीरश्च स्निग्धगम्भीरः
  - स्निग्धगम्भीरः निर्घोषः यस्य, तम्
- प्रावृषेण्यम् = प्रावृषि भवः प्रावृषेण्यः, तम्
- पयोवाहम् = पयांसि वहति इति पयोवाहः, तम्
- विद्युदैरावतौ
  - विशेषेण द्योतते इति विद्युत्
  - इरावान् (समुद्रः); तत्र भवः ऐरावतः
  - विद्युच्च ऐरावतश्च ।

======================================
==

३७. दम्पत्योराश्रमगमनम् –

**मा भूदाश्रमपीडेति परिमेयपुरःसरौ ।**

**अनुभावविशेषात्तु सेनापरिवृताविव ॥ ३७ ॥**

**पदच्छेदः**

मा, भूत्, आश्रमपीडा, इति, परिमेयपुरःसरौ, अनुभावविशेषात्, तु, सेनापरिवृतौ, इव ।

**आकाङ्क्षाक्रमः**

- (तौ जग्मतुः)
- किम्भूतौ दम्पती (जग्मतुः) ? परिमेयपुरःसरौ
- कस्मात् हेतोः ? आश्रमपीडा मा भूत् इति (हेतोः)
- किम्भूतौ इव ? सेनापरिवृतौ इव
- कस्मात् हेतोः ? अनुभावविशेषात्

**अन्वयार्थः**

- आश्रमपीडा = वसिष्ठाश्रमस्य बाधा
- मा भूत् = न स्यात्
- इति = इति हेतोः
- परिमेयपुरःसरौ = परिमितैः परिचरैः सहितौ
- अनुभावविशेषात् तु = तेजोविशेषात्
- सेनापरिवृतौ इव = परितः सेनया व्याप्तौ इव
- (तौ जग्मतुः)।

**अन्वयः**

आश्रमपीडा मा भूत् इति परिमेयपुरःसरौ, अनुभावविशेषात् तु सेनापरिवृतौ इव (तौ जग्मतुः)।

**भावार्थः**

मुनीनां आश्रमाः जनस्थानात् दूरे तपश्चर्यानुकूलेषु विविक्तस्थानेषु भवन्ति । नृपोचित-सैन्यदलेन सह गम्यते चेत् आश्रमवासिनां बाधा भवेत् इति धिया सपत्नीकः दिलीपचक्रवर्ती अल्पसंख्याकैः अनुचरैः सेव्यमानः आश्रमं प्रति प्रस्थितः । किन्तु दम्पत्योः तेजसः प्रतापस्य च प्रभावात् सैन्येन आवेष्टितौ इव तौ ययतुः ।

**समासः वृत्तिश्च**

- आश्रमपीडा = आश्रमस्य पीडा
- परिमेयपुरःसरौ
    - परिमेयाः = परिमातुं योग्याः
    - परिमेयपुरःसरौ = परिमेयाः पुरःसराः ययोः तौ
- अनुभावविशेषात् = अनुभावस्य विशेषः, तस्मात्
- सेनापरिवृतौ = सेनया परिवृतौ

**अवधेयम्**

- **मा भूत् – अत्र नियमद्वयम्**
    - १. क्रिया पदस्य अर्थः – ‘अभूत्’ अद्यतनभूतकालार्थे लुङ् लकारे भवति । किन्तु ‘माङ्’-योगे (‘माङि लुङ्’ इति सूत्रेण) लुङ् आशीरर्थे भवति ।
    - २. क्रियापदस्य रूपं च – ‘न माङ् योगे’ इति सूत्रेण अडागमनिषेधः ।

======================================
=

३८. दम्पत्योराश्रमगमनम् – सुखस्पर्शः वायुः

**सेव्यमानौ सुखस्पर्शैः शालनिर्यासगन्धिभिः ।**
**पुष्परेणूत्किरैर्वातैराधूतवनराजिभिः ॥ ३८ ॥**

**पदच्छेदः**

सेव्यमानौ, सुखस्पर्शैः, शालनिर्यासगन्धिभिः, पुष्परेणूत्किरैः, वातैः, आधूतवनराजिभिः ।

**आकाङ्क्षाक्रमः**

- (तौ जग्मतुः)
- कथम्भूतौ (दम्पती जग्मतुः) ? सेव्यमानौ
- कैः सेव्यमानौ? वातैः
- कीदृशैः वातैः? सुखस्पर्शैः
- पुनः कीदृशैः? शालनिर्यासगन्धिभिः
- पुनः कीदृशैः? पुष्परेणूत्किरैः
- पुनः कीदृशैः? आधूतवनराजिभिः

**अन्वयार्थः**

- सुखस्पर्शैः = शीतलत्वात् प्रियकरैः (वातैः)
- शालनिर्यासगन्धिभिः = सर्जवृक्षात् निस्यन्दमानेन द्रव्येण सुरभितैः (वातैः)
- पुष्परेणूत्किरैः = कुसुमधूलिभिः विकीर्णैः (वातैः)
- आधूतवनराजिभिः = ईषत्कम्पिताः वनपङ्क्तयः यैः (तादृशवातैः)
- वातैः = पवनैः
- सेव्यमानौ = परिचर्यमाणौ
- (तौ जग्मतुः)।

**अन्वयः**

सुखस्पर्शैः शालनिर्यासगन्धिभिः पुष्परेणूत्किरैः आधूतवनराजिभिः वातैः सेव्यमानौ (तौ जग्मतुः)।

**भावार्थः**

गुर्वाश्रमं प्रति पुत्रनिमित्तं गच्छन्तौ दम्पती सन्निमित्तसूचकेन[१] शीतलमन्दमारुतेन सेव्यमानौ भवतः। स च मारुतः सर्जवृक्षात्[२] स्रवता निस्यन्देन सुरभिमान् आसीत् । वायुः पुष्पपरागान् इतस्ततः विकिरन् वृक्षावलीः च कम्पयन् वाति । स च पवनः त्वचे सुखावहः आसीत् इत्यर्थः ।

[१]कुमारसम्भवेऽपि पार्वतीजननप्रसङ्गे शुभनिमित्तानि वर्णयति कविवरः कालिदासः-

प्रसन्नदिक्पांसुविविक्तवातं शङ्खस्वनानन्तरपुष्पवृष्टि ।
शरीरिणां स्थावरजङ्गमानां सुखाय तज्जन्मदिनं बभूव ॥ (प्रथमसर्गः)

[२]अश्वकर्णः चिरपर्णः सर्जः इति शालतरोः पर्यायपदानि

**समासः वृत्तिश्च**

- सुखस्पर्शैः = सुखः स्पर्शः येषां ते सुखस्पर्शाः, तैः
- शालनिर्यासगन्धिभिः
  - शालनिर्यासाः = शालेभ्यः निर्यासाः
  - शालनिर्यासगन्धिभिः शालनिर्यासगन्धः अस्ति येषु ते, तैः
- पुष्परेणूत्किरैः
  - पुष्परेणवः = पुष्पाणां रेणवः
  - पुष्परेणूत्किरैः = पुष्परेणूनाम् उत्किराः, तैः
- आधूतवनराजिभिः
  - वनराजयः = वनानां राजयः
  - आधूतवनराजिभिः = आधूताः वनराजयः यैः (वातैः), तैः

=====================================
=

३९. दम्पत्योराश्रमगमनम् – मयूरकेकाः

**मनोभिरामाः शृण्वन्तौ रथनेमिस्वनोन्मुखैः ॥**

**षड्जसंवादिनीः केका द्विधा भिन्नाः शिखण्डिभिः ॥ ३९ ॥**

**पदच्छेदः**

मनोभिरामाः, शृण्वन्तौ, रथनेमिस्वनोन्मुखैः, षड्जसंवादिनीः, केकाः, द्विधा, भिन्नाः, शिखण्डिभिः ।

**आकाङ्क्षाक्रमः**

- (तौ जग्मतुः)
- काः शृण्वन्तौ (दम्पती जग्मतुः) ? केकाः
- कीदृशीः केकाः ? द्विधाः भिन्नाः
- कैः ? शिखण्डिभिः
- कीदृशैः शिखण्डिभिः? रथनेमिस्वनोन्मुखैः
- पुनः कीदृशीः केकाः ? षड्जसंवादिनीः
- पुनः कीदृशीः केकाः ? मनोऽभिरामाः

**अन्वयार्थः**

- रथनेमिस्वनोन्मुखैः = रथचक्रप्रान्ताभ्याम् उत्पन्नं ध्वनिं मेघध्वनिं मत्वा ये मयूराः उर्ध्वमुखाः अभवन् तादृशैः
- शिखण्डिभिः = मयूरैः
- द्विधा भिन्नाः = शुद्धविकृतभेदेन द्विप्रकारकाः (षड्जस्वरध्वनयः)
- षड्जसंवादिनीः = षड्जसदृशीः (षड्भ्यः स्थानेभ्यः जातः इति षड्जः – स्वरविशेषः)
- मनोभिरामाः = चित्तरञ्जकाः
- केकाः = मयूरवाणीः
- शृण्वन्तौ = आकर्णयन्तौ
- (तौ जग्मतुः)।

**अन्वयः**

रथनेमिस्वनोन्मुखैः शिखण्डिभिः द्विधा भिन्नाः षड्जसंवादिनीः मनोभिरामाः केकाः शृण्वन्तौ (तौ जग्मतुः)।

**भावार्थः**

रथनेम्योः उत्थितं ध्वनिम् आकर्ण्य तं मेघस्वनं मन्यन्ते मयूराः । तथा सम्भ्रान्ताः उर्ध्वमुखाः ते मयूराः हर्षेण केकारवं कुर्वन्ति । ताः केकाः [१]षड्ज-स्वरेण[२] तुल्याः भवन्ति। तादृशीं वाणीं निशाम्यन्तौ तौ दम्पती प्रयातौ इत्यर्थः।

[१]"नासाकण्ठमुरस्तालुजिह्वादन्तांश्च संस्पृशन् ।
षड्भ्यः सञ्जायते यस्मात्तस्मात्षड्ज इति स्मृतः॥"
"षड्जं मयूरो वदति ।" इति मातङ्गेन सङ्गीतशास्त्रग्रन्थे उक्तम् ।

[२]निषाद-ऋषभ-गान्धार-षड्ज-मध्यम-धैवत-पञ्चमाः – इमे सप्तस्वराः ।

**समासः वृत्तिश्च**

- रथनेमिस्वनोन्मुखैः
  - रथस्य नेमी – रथनेमी ।
  - रथनेम्योः स्वनः – रथनेमिस्वनः ।
  - उद्गतं मुखं येषां ते – उन्मुखाः ।
  - रथनेमिस्वनेन उन्मुखाः – रथनेमिस्वनोन्मुखाः, तैः
- शिखण्डिभिः = शिखण्डः अस्य अस्तीति शिखण्डी
- षड्जसंवादिनीः = षड्जसदृशीः
- मनोभिरामाः = मनसः अभिरामाः
- केकाः = के (मूर्ध्नि) कायन्ति (ध्वनन्ति) इति केकाः ।

=====================================
=

४०. दम्पत्योराश्रमगमनम् – मार्गे मृगमिथिनुनानि

**परस्पराक्षिसादृश्यमदूरोज्झितवर्त्मसु ।**
**मृगद्वन्द्वेषु पश्यन्तौ स्यन्दनाबद्धदृष्टिषु ॥ ४० ॥**

**पदच्छेदः**

परस्पराक्षिसादृश्यम्, अदूरोज्झितवर्त्मसु, मृगद्वन्द्वेषु, पश्यन्तौ, स्यन्दनाबद्धदृष्टिषु ।

**आकाङ्क्षाक्रमः**

- (तौ जग्मतुः)
- किं कुर्वन्तौ ? पश्यन्तौ
- किम् (पश्यन्तौ) ? परस्पराक्षिसादृश्यम्
- केषु ? मृगद्वन्द्वेषु
- कीदृशेषु ? स्यन्दनाबद्धदृष्टिषु
- पुनः कीदृशेषु ? अदूरोज्झितवर्त्मसु

**अन्वयः**

अदूरोज्झितवर्त्मसु स्यन्दनाबद्धदृष्टिषु मृगद्वन्द्वेषु परस्पराक्षिसादृश्यं पश्यन्तौ (तौ जग्मतुः)।

**अन्वयार्थः**

- अदूरोज्झितवर्त्मसु = मार्गपार्श्वे स्यन्दमानस्य रथस्य समीपे आसीनेषु (हरिणमिथुनेषु)
- स्यन्दनाबद्धदृष्टिषु = अनन्यदृष्ट्या रथम् एव आलोकमानेषु
- मृगद्वन्द्वेषु = हरिणमिथुनेषु
- (तौ) = सुदक्षिणादिलीपौ
- परस्पराक्षिसादृश्यम् = अन्योन्यस्य नयनानुरूपताम्

- पश्यन्तौ = वीक्षमाणौ
- (जग्मतुः) = ययतुः ।

**भावार्थः**

वनमार्गे रथः स्यन्दते । रथमार्गस्य निकटे एव नैकानि मृगमिथुनानि दृश्यन्ते स्म । रथवेगात् तच्छब्दाद्वा अभीताः ते मृगाः कौतुकात् निर्निमेषदृष्ट्या रथं वीक्षमाणाः आसन् । अर्थात्, मुग्धप्रकृतयः (Innocent, guileless) मृगाः तयोः दम्पत्योः सौम्याकृती विलोक्य विश्रब्धाः सन्तः धावतः रथस्य सामीप्यं न पर्यत्यजन्। हरिणमिथुनेषु अन्योन्यस्य नयनसादृश्यम् अवलोकितवन्तौ सुदक्षिणादिलीपौ । दिलीपः हरिणीषु पत्न्याः लोचनसाम्यं पश्यन्, सुदक्षिणा च हरिणेषु पत्युः लोचनसाम्यं पश्यन्ती आसीत् ।

**समासः वृत्तिश्च**

- अदूरोज्झितवर्त्मसु = अदूरम् उज्झितं (त्यक्तं) वर्त्म यैः तानि (मृगद्वन्द्वानि), तेषु – बहुव्रीहिः ।
- स्यन्दनाबद्धदृष्टिषु
  - आबद्धदृष्टिः = आसमन्तात् (सर्वतः) बद्धा दृष्टिः – कर्मधारयः ।
  - स्यन्दनाबद्धदृष्टिषु = स्यन्दने आबद्धदृष्टिः यैः तानि, तेषु – बहुव्रीहिः ।
- मृगद्वन्द्वेषु = मृगाणां द्वन्द्वानि, तेषु – षष्ठीतत्पुरुषः ।
- परस्पराक्षिसादृश्यम्
  - सादृश्यम् = सदृश + ष्यञ्-प्रत्ययः – सदृशस्य भावः – तद्धितान्तः ।
  - अक्षिसादृश्यम् = अक्ष्णां सादृश्यम् – षष्ठीतत्पुरुषः ।
  - परस्पराक्षिसादृश्यम् = परस्परस्य अक्षिसादृश्यम् – षष्ठीतत्पुरुषः ।

=====================================
=

४१. दम्पत्योराश्रमगमनम् – आकाशे सारसपङ्क्तयः

**श्रेणीबन्धाद्वितन्वद्भिरस्तम्भां तोरणस्रजम् ।**
**सारसैः कलनिर्ह्रादैः क्वचिदुन्नमिताननौ ॥ ४१ ॥**

**पदच्छेदः**

श्रेणीबन्धात्, वितन्वद्भिः, अस्तम्भाम्, तोरणस्रजम्, सारसैः, कलनिर्ह्रादैः, क्वचित्, उन्नमिताननौ ।

**आकाङ्क्षाक्रमः**

- (तौ जग्मतुः)
- कथम्भूतौ जग्मतुः? उन्नमिताननौ
- कैः (करणैः) उन्नमिताननौ ? सारसैः
- कीदृशैः सारसैः ? कलनिर्ह्रादैः
- पुनः कीदृशैः सारसैः ? वितन्वद्भिः
- कां वितन्वद्भिः ? तोरणस्रजम्
- कीदृशीं तोरणस्रजम् ? अस्तम्भाम्
- कस्मात् हेतोः वितन्वद्भिः ? श्रेणीबन्धात्

**अन्वयः**

क्वचित् श्रेणिबन्धात् अस्तम्भां तोरणस्रजं वितन्वद्भिः कलनिर्ह्रादैः सारसैः उन्नमिताननौ (तौ जग्मतुः)।

**अन्वयार्थः**

- क्वचित् = कुत्रचित्

- श्रेणिबन्धात् = (आकाशे) पङ्क्तिबन्धनात्
- अस्तम्भाम् तोरणस्रजम् = आधारस्तम्भ-रहितां बहिर्द्वारमालाम्
- वितन्वद्भिः = कुर्वद्भिः
- कलनिर्ह्रादैः = मधुरं कूजद्भिः
- सारसैः = पक्षिविशेषैः (करणैः) (सारसः, सारसी f. – cranes )
- उन्नमिताननौ = सारससमूहं द्रष्टुम् उद्वीक्षन्तौ
- (तौ जग्मतुः) = ययतुः ।

**भावार्थः**

गगने बद्धपङ्क्तयः सारसाः डयन्ते स्म । कूजतां डयमानानां सारसानाम् आरचितक्रमः स्तम्भ-रहित-तोरणमाल्यम् इव उत्प्रेक्ष्यते अत्र । सारसपङ्क्तीः विलोकयितुम् उपरिकृतवदनौ तौ दम्पती ययतुः ।

**समासः वृत्तिश्च**

- श्रेणिबन्धात् = श्रेण्याः बन्धः, तस्मात् – षष्ठीतत्पुरुषः
- अस्तम्भाम् = न विद्यते स्तम्भः यस्याः सा, ताम्
- तोरणस्रजम्
  - स्रक् = सृज + ऋत्विगादिना कर्तरि कर्मणि वा क्विन्
    - स्रज् ( स्त्री )
    - एकवचनम् द्विवचनम् बहुवचनम्

| | | | |
|---|---|---|---|
| प्रथमा | स्रक् | स्रजौ | स्रजः |
| द्वितीया | स्रजम् | स्रजौ | स्रजः |

- तोरणस्रजम् = तोरणस्य स्रक्, ताम्
- कलनिर्ह्रादैः = कलः निर्ह्रादः येषां ते, तैः – बहुव्रीहिः ।
- उन्नमिताननौ = उन्नमिते आनने याभ्यां तौ – बहुव्रीहिः ।

**कृदन्तपदम्**

- वितन्वद्भिः = वि + तन् "तनु विस्तारे" + शतृ-प्रत्ययः ।

---

४२. दम्पत्योराश्रमगमनम् – पवनस्यानुकूल्यं शुभसूचकम्

**पवनस्यानुकूलत्वात्प्रार्थनासिद्धिशंसिनः ।**
**रजोभिस्तुरगोत्कीर्णैरस्पृष्टालकवेष्टनौ ॥ ४२ ॥**

**पदच्छेदः**

पवनस्य अनुकूलत्वात् प्रार्थनासिद्धिशंसिनः रजोभिः तुरगोत्कीर्णैः अस्पृष्टालकवेष्टनौ।

**आकाङ्क्षाक्रमः**

- (तौ जग्मतुः)
- कथम्भूतौ जग्मतुः? अस्पृष्टालकवेष्टनौ
- कैः अस्पृष्टालकवेष्टनौ ? रजोभिः
- कीदृशैः रजोभिः ? तुरगोत्कीर्णैः
- कस्मात् अस्पृष्टालकवेष्टनौ ? अनुकूलत्वात्
- कस्य अनुकूलत्वात् ? पवनस्य
- कीदृशस्य पवनस्य ? प्रार्थनासिद्धिशंसिनः

**अन्वयः**

प्रार्थनासिद्धिशंसिनः पवनस्य अनुकूलत्वात् तुरगोत्कीर्णैः रजोभिः अस्पृष्टालकवेष्टनौ (तौ जग्मतुः)।

**अन्वयार्थः**

- प्रार्थनासिद्धिशंसिनः = अभीष्टस्य प्राप्तेः सूचकस्य

- पवनस्य = वायोः
- अनुकूलत्वात् = तदा रथगमनदिशि एव वाति स्म पवनः, तस्मात्
- तुरगोत्कीर्णैः = अश्वानां खुरैः उत्थापितैः
- रजोभिः = पांसुभिः (धुलिभिः, मलैः)
- अस्पृष्टालकवेष्टनौ = अलिप्ताः राज्ञाः अलकाः (curls) राज्ञः उष्णीषं (turban) च, तथाभूतौ
- (तौ जग्मतुः)।

**भावार्थः**

गन्तव्यदिशं प्रति पवनो[१] वाति स्म इत्येतत् दम्पत्योः मनोरथस्य सिद्धिः अचिरात् भविष्यति इति सूचकमासीत् । तस्माच्च अश्वानां खुरैः उत्कीर्णाः धूलयः सुदक्षिणायाः ललाटे लम्बमानानि अलकानि दिलीपस्य शिरसि बद्धं वेष्टनं च न अलिम्पन् ।

References:

- पूर्वकविभिः उक्तम् –
  - "शुभगन्धे च शब्दे च सानुकूले च मारुते ।
    प्रस्थिते सर्वकार्याणां सर्वसिद्धिर्ध्रुवं भवेत् ॥"
- [१]कुमारसम्भवेऽपि पार्वतीजननप्रसङ्गे शुभनिमित्तानि वर्णयति कविवरः कालिदासः-
  - **प्रसन्नदिक्पांसुविविक्तवातं** शङ्खस्वनानन्तरपुष्पवृष्टि ।
    शरीरिणां स्थावरजङ्गमानां सुखाय तज्जन्मदिनं बभूव ॥

(कुमारसम्भवे प्रथमसर्गः)

**समासः वृत्तिश्च**

- प्रार्थनासिद्धिशंसिनः
  - प्रार्थनासिद्धिः = प्रार्थनायाः सिद्धिः

- प्रार्थनासिद्धिशंसिनः = प्रार्थनासिद्धिं शंसितुं शीलं यस्य सः प्रार्थनासिद्धिसंशी, तस्य
- तुरगोत्कीर्णैः = तुरगैः उत्कीर्णानि (रजांसि) तुरगोत्कीर्णानि, तैः
- अस्पृष्टालकवेष्टनौ
    - अस्पृष्टाः = न स्पृष्टाः
    - अस्पृष्टालकवेष्टनौ = अस्पृष्टाः अलकाः वेष्टनं च ययोः, तौ

**कृदन्तः**

- पवनः = पुनाति इति पवनः = पू + युच्-प्रत्ययः । बहुलमन्यत्रापीति युच् ।

=======================================
=

४३. दम्पत्योराश्रमगमनम् – कमलगन्धी पवनः

**सरसीष्वरविन्दानां वीचिविक्षोभशीतलम् ।**
**आमोदमुपजिघ्रन्तौ स्वनिःश्वासानुकारिणम् ॥ ४३ ॥**

**पदच्छेदः**

सरसीषु, अरविन्दानाम्, वीचिविक्षोभशीतलम्, आमोदम्, उपजिघ्रन्तौ, स्वनिःश्वासानुकारिणम् ।

**आकाङ्क्षाक्रमः**

- (तौ जग्मतुः)
- कथम्भूतौ जग्मतुः? उपजिघ्रन्तौ
- किम् उपजिघ्रन्तौ ? आमोदम्
- केषाम् आमोदम् ? अरविन्दानाम्
- कीदृशम् आमोदम् ? स्वनिःश्वासानुकारिणम्

- पुनः कीदृशम् आमोदम् ? वीचिविक्षोभशीतलम्
- कुत्र वीचिविक्षोभशीतलम् ? सरसीषु

**अन्वयः**

सरसीषु वीचिविक्षोभशीतलं स्वनिःश्वासानुकारिणम् अरविन्दानाम् आमोदम् उपजिघ्रन्तौ (तौ जग्मतुः) ।

**अन्वयार्थः**

- सरसीषु = तडागेषु
- वीचिविक्षोभशीतलम् = तरङ्गाणां विधूननेन (सञ्चलनेन) शीतलीभूतम्
- स्वनिःश्वासानुकारिणम् = स्वस्य श्वासवायोः अनुरूपम्
- अरविन्दानाम् = कमलानाम्
- आमोदम् उपजिघ्रन्तौ = सुगन्धेः जिघ्रणं कुर्वन्तौ
- (तौ जग्मतुः)।

**भावार्थः**

वायुना प्रसारितं कमलगन्धं घ्राणेन गृह्णतौ सुदक्षिणादिलीपौ ययतुः । सः पवनः तडागेषु उत्पन्नानां वीचीनां सञ्चलनेन शीतलत्वमापन्नः तयोः निःश्वासानुरूपः आसीत् । एतेन तयोः उत्कृष्टस्त्रीपुंसजातीयत्वम् उक्तम् ।

**समासः वृत्तिश्च**

- वीचिविक्षोभशीतलम्
  - वीचिविक्षोभः = वीचीनां विक्षोभः (तरङ्गाणां सञ्चलनम्) – षष्ठीतत्पुरुषः ।
  - वीचिविक्षोभशीतलम् = वीचिविक्षोभेण शीतलः, तम् – तृतीयातत्पुरुषः ।
- स्वनिःश्वासानुकारिणम्
  - स्वनिःश्वासः = स्वस्य निःश्वासः – षष्ठीतत्पुरुषः ।

- स्वनिःश्वासानुकारिणम् = स्वनिःश्वासम् अनुकर्तुं शीलम् अस्य इति स्वनिःश्वासानुकारी, तम् – तद्धितान्तः ।

**कृदन्तः**

- आमोदम् = आङ् + मुद् + ल्युट्-प्रत्ययः

=======================================
=

४४. दम्पत्योराश्रमगमनम् – मार्गे याज्ञिकानाम् आशीर्ग्रहणम्

**ग्रामेष्वात्मविसृष्टेषु यूपचिह्नेषु यज्वनाम् ।**
**अमोघाः प्रतिगृह्णन्तावर्घ्यानुपदमाशिषः ॥ ४४ ॥**

**पदच्छेदः**

ग्रामेषु, आत्मविसृष्टेषु, यूपचिह्नेषु, यज्वनाम्, अमोघाः, प्रतिगृह्णन्तौ, अर्घ्यानुपदम्, आशिषः।

**आकाङ्क्षाक्रमः**

- (तौ जग्मतुः)
- किं कुर्वन्तौ ? – प्रतिगृह्णन्तौ
- काः प्रतिगृह्णन्तौ ?- आशिषः
    - केषाम् आशिषः ? – यज्वनाम्
        - कीदृशीः आशिषः ? – अमोघाः
    - कदा प्रतिगृह्णन्तौ ? – अर्घ्यानुपदम्
    - कुत्रप्रतिगृह्णन्तौ ? – ग्रामेषु
        - कीदृशेषु ग्रामेषु ?- आत्मविसृष्टेषु
        - पुनः कीदृशेषु ग्रामेषु ?- यूपचिह्नेषु

**अन्वयः**

आत्मविसृष्टेषु यूपचिह्नेषु ग्रामेषु यज्वनाम् अमोघाः आशिषः अर्घ्यानुपदं प्रतिगृह्णन्तौ (तौ जग्मतुः)।

**अन्वयार्थः**

- आत्मविसृष्टेषु = स्वेन (दिलीपेन विप्रेभ्यः) दानं कृतं यत्र यत्र, तेषु
- यूपचिह्नेषु ग्रामेषु = यागस्तम्भाः यत्र यत्र प्ररोपिताःतेषु ग्रामेषु
- यज्वनाम् = विधिना यागानुष्ठातॄणाम्
- अमोघाः आशिषः = सफलान् आशीर्वादान्
- अर्घ्यानुपदम् = विधिवत् पूजाद्रव्यस्य स्वीकारानन्तरम्
- प्रतिगृह्णन्तौ = स्वीकुर्वन्तौ
- (जग्मतुः) = ययतुः ।

**भावार्थः**

वनमार्गेण रथेन आश्रमं प्रति गच्छन्तौ सुदक्षिणादिलीपौ ग्रामेषु [१]यूपचिह्निताः यज्ञशालाः प्रविश्य यज्ञकर्तॄन् विप्रान् दानेन सम्मानयन्ति स्म, पूजाविधेः पश्चात् च तेषां विप्राणाम् आशीर्वादान् स्वीकुर्वन्तौ तौ जग्मतुः ।

[१]यूपः – यज्ञार्थं संस्कृतः दारुविशेषः

**समासः वृत्तिश्च**

- आत्मविसृष्टेषु = आत्मना विसृष्टाः – आत्मविसृष्टाः, तेषु-तृतीयातत्पुरुषः ।
- यूपचिह्नेषु = यूपाः एव चिह्नानि येषां ते (ग्रामाः) – यूपचिह्नाः, तेषु-बहुव्रीहिः ।
- अमोघाः = न मोघाः – नञ्तत्पुरुषः ।
- अर्घ्यानुपदम्
    - अर्घ्यम्= अर्घार्थं द्रव्यम्

- अनुपदम् – पदस्य पश्चात् -पश्चातार्थे अव्ययीभावः ।
- अर्घ्यानुपदम्= अर्घ्यस्य अनुपदम् – षष्ठीतत्पुरुषः ।

**कृदन्तपदानि**

- प्रतिगृह्णन्तौ =प्रति + ग्रह् "ग्रह उपादाने" + शतृ-प्रत्ययः, तौ । प्रतिगृह्णाति = स्वीकरोति ।
- विसृष्टेषु =वि + सृज् "सृजँ विसर्गे" + क्त-प्रत्ययः, तेषु । विसृष्टम् = त्यक्तम् ।

=====================================
=

४५. दम्पत्योराश्रमगमनम् – ग्रामवृद्धैः सह वार्तालापः

**हैयङ्गवीनमादाय घोषवृद्धानुपस्थितान् ।**
**नामधेयानि पृच्छन्तौ वन्यानां मार्गशाखिनाम् ॥ ४५ ॥**

**पदच्छेदः**

हैयङ्गवीनम्, आदाय, घोषवृद्धान्, उपस्थितान्, नामधेयानि, पृच्छन्तौ, वन्यानाम्, मार्गशाखिनाम् ।

**आकाङ्क्षाक्रमः**

- तौ जग्मतुः
- किं कुर्वन्तौ ?पृच्छन्तौ
- कान् पृच्छन्तौ ? घोषवृद्धान्('पृच्छ्' द्विकर्मकधातुः)
  - कीदृशान् घोषवृद्धान् ? उपस्थितान्
    - किं कृत्वा उपस्थितान् ? आदाय
      - किम् आदाय ? हैयङ्गवीनम्
    - कानि पृच्छन्तौ ? नामधेयानि ('पृच्छ्' द्विकर्मकधातुः)

- केषां नामधेयानि ? मार्गशाखिनाम्
    - कीदृशानां मार्गशाखिनाम् ? वन्यानाम्

**अन्वयः**

हैयङ्गवीनम् आदाय उपस्थितान् घोषवृद्धान् वन्यानां मार्गशाखिनाम् नामधेयानि पृच्छन्तौ (तौ जग्मतुः)।

**अन्वयार्थः**

- हैयङ्गवीनम् = ह्यस्तनगोदोहनात् प्राप्तात् क्षीरात् निर्मितं घृतम्
- आदाय = गृहीत्वा
- उपस्थितान् = समागतान्
- घोषवृद्धान् = आभीरपल्लीषु ये वृद्धाः, तान्
- वन्यानां मार्गशाखिनाम् = वनप्रदेशस्थानां वृक्षाणाम्
- नामधेयानि = नामानि
- पृच्छन्तौ = जिज्ञासमानौ (तौ जग्मतुः)।

**भावार्थः**

दम्पती यथा विप्रेभ्यः आशीर्वादान् गृहीतवन्तौ तथैव लघुग्रामेभ्यः आगतेभ्यः वृद्धेभ्यः प्रीत्या प्रदत्तं सद्योनिर्मितं घृतम् अपि गृहीतवन्तौ । प्रकृतिप्रियाः ग्रामीणाः खगमृगतरून् बन्धुवत् परिचिन्वन्ति इति विदितमेव । अतः जिज्ञासू तौ दम्पती तान् ग्रामवृद्धान् मार्गवृक्षाणां नामानि पृच्छन्तौ आश्रमदिशि ययतुः ।

**समासः वृत्तिश्च**

- हैयङ्गवीनम् = ह्यः गोदोहस्य विकारः
- घोषवृद्धान् = घोषेषु वृद्धाः घोषवृद्धाः, तान्- सप्तमीतत्पुरुषः ।
- वन्यानाम् = वनेभवाः वन्याः, तेषाम्
- मार्गशाखिनाम्

- शाखिनः= शाखा येषां सन्ति इति – बहुव्रीहिः ।
- मार्गशाखिनाम् = मार्गस्य शाखिनः मार्गशाखिनः, तेषाम्-षष्ठीतत्पुरुषः ।

**कृदन्तानि**

- आदाय = आ + दा "दादाने" + ल्यप्-प्रत्ययः। आददाति = स्वीकरोति ।
- उपस्थितान् = उप + स्था "स्थागतिनिवृत्तौ" + क्त-प्रत्ययः, तान् ।
- पृच्छन्तौ = पृच्छ्"प्रच्छ ज्ञीप्सायाम्" + शतृ-प्रत्ययः, तौ ।

---

४६. दम्पत्योः अलौकिकी शोभा –

**काप्यभिख्या तयोरासीद् व्रजतोः शुद्धवेषयोः ।**
**हिमनिर्मुक्तयोर्योगे चित्राचन्द्रमसोरिव ॥ ४६ ॥**

**पदच्छेदः**

कापि, अभिख्या, तयोः, आसीत्, व्रजतोः, शुद्धवेषयोः, हिमनिर्मुक्तयोः, योगे, चित्राचन्द्रमसोः, इव ।

**आकाङ्क्षाक्रमः**

- आसीत्
- का आसीत् ? अभिख्या
  - कीदृशी अभिख्या ? कापि
- कदा आसीत् ? योगे
  - कयोः योगे ? तयोः
  - कीदृशयोः ? व्रजतोः
  - पुनः कीदृशयोः ? शुद्धवेषयोः
- कयोः योगे इव ? चित्राचन्द्रमसोः योगे इव

- कीदृशयोः चित्राचन्द्रमसोः इव ? हिमनिर्मुक्तयोः

**अन्वयः**

व्रजतोः शुद्धवेषयोः तयोः योगे, हिमनिर्मुक्तयोः चित्राचन्द्रमसोः योगे इव, कापि अभिख्या आसीत् ।

**अन्वयार्थः**

- व्रजतोः शुद्धवेषयोः तयोः = गच्छतोः उज्ज्वलवस्त्रधरयोः तयोः
- हिमनिर्मुक्तयोः = तुषारविहीनयोः (निर्मलयोः)
- चित्राचन्द्रमसोः इव = चित्रानक्षत्रस्य च पूर्णचन्द्रस्य च (चैत्रपूर्णिमायां)
- योगे (सति) = सङ्गतौ सति
- कापि = अनिर्वचनीया
- अभिख्या आसीत् = शोभा आसीत्

**भावार्थः**

यदा शिशिरऋतुः पर्यवसितः भवति तदा चैत्रपूर्णिमायां चित्रानक्षत्रपूर्णचन्द्रयोः योगे सति किञ्चित् अलौकिकं सौन्दर्यं भवति। अर्थात् हिमराहित्यात् अनयोः कान्तिः प्रवृद्धा भवति । एवम् एव शुभ्रवसनयोः सुदक्षिणादिलीपयोः रमणीयता वर्णनातीता इत्यर्थः ।

**समासः वृत्तिश्च**

- शुद्धवेषयोः = शुद्धः वेषः ययोः तौ – शुद्धवेषौ, तयोः – बहुव्रीहिः ।
- हिमनिर्मुक्तयोः = हिमेन निर्मुक्तौ – हिमनिर्मुक्तौ, तयोः – तृतीयातत्पुरुषः ।
- चित्राचन्द्रमसोः = चित्रा च चन्द्रमाः च चित्राचन्द्रमसौ, तयोः- इतरेतरद्वन्द्वः ।

**कृदन्तानि**

- व्रजतोः – व्रज् “व्रजगतौ” + शतृ-प्रत्ययः, तयोः ।

========================================
=

४७ दम्पत्योराश्रमगमनम् – प्रयाणम् अवसितम्

**तत्तद्भूमिपतिः पत्न्यै दर्शयन्प्रियदर्शनः।**
**अपि लङ्घितमध्वानं बुबुधे न बुधोपमः ॥ ४७ ॥**

**पदच्छेदः**

तत् तत्, भूमिपतिः, पत्न्यै, दर्शयन्, प्रियदर्शनः, अपि, लङ्घितम्, अध्वानम्, बुबुधे, न, बुधोपमः ।

**आकाङ्क्षाक्रमः**

- न बुबुधे
- कः न बुबुधे ? भूमिपतिः
- कीदृशः भूमिपतिः ? प्रियदर्शनः
- कीदृशः भूमिपतिः ? बुधोपमः
- कम् न बुबुधे ? अध्वानम् अपि
- कीदृशम् अध्वानम् ? लङ्घितम्
- किं कुर्वन् ? दर्शयन्
- किं दर्शयन् ? तत्तत्
- कस्यै? पत्न्यै

**अन्वयः**

प्रियदर्शनः बुधोपमः भूमिपतिः पत्न्यै तत्तत् दर्शयन् लङ्घितम् अध्वानम् अपि

न बुबुधे ।

**अन्वयार्थः**

- प्रियदर्शनः बुधोपमः भूमिपतिः = मनोहरवपुः सौम्यः पृथिवीनाथः
- तत्तत् = तत्तद् दर्शनीयं वस्तु
- पत्न्यै दर्शयन् = भार्यायै सन्दर्शयन् (वर्णयन्)
- लङ्घितम् अध्वानम् अपि = अतिक्रान्तं मार्गम् अपि
- न बुबुधे = न ज्ञातवान् ।

**भावार्थः**

मनोहरगात्रः बुधसदृशसौम्यः पृथिवीपतिः स्वभार्यायैः सुदक्षिणायै मार्गस्थानां अद्भुतदर्शनीयानां वस्तूनां दर्शने तथा मग्नः यत् सः यात्राक्लान्तिम् अपि नानुभूतवान् ।

**समासः वृत्तिश्च**

- प्रियदर्शनः = प्रियं दर्शनं यस्य सः- बहुव्रीहिः ।
- बुधोपमः = बुधः उपमा यस्य सः (उपमा उपमानं स्यात् इत्यमरः)- बहुव्रीहिः ।
- भूमिपतिः
  - पतिः = पाति इति पतिः ।
  - भूमिपतिः = भूमेः पतिः- षष्ठीतत्पुरुषः ।

**कृदन्तानि**

- दर्शयन् – दृश् 'प्रेक्षणे' + णिच् + शतृ -प्रत्ययः ।

=========================================
=

४८. दम्पत्योराश्रमगमनम् – आश्रमप्राप्तिः

**स दुष्प्रापयशाः प्रापदाश्रमं श्रान्तवाहनः ।**

**सायं संयमिनस्तस्य महर्षेर्महिषीसखः ॥ ४८ ॥**

**पदच्छेदः**

सः, दुष्प्रापयशाः, प्रापत्, आश्रमम्, श्रान्तवाहनः, सायम्, संयमिनः तस्य, महर्षेः महिषीसखः ।

**आकाङ्क्षाक्रमः**

- प्रापत्
- कः? सः
  - कीदृशः ? दुष्प्रापयशाः (सकारान्तः)
  - पुनः कीदृशः ? श्रान्तवाहनः
  - पुनः कीदृशः ? महिषीसखः
- कुत्र प्रापत् ? आश्रमम्
  - कस्य ? महर्षेः
  - कीदृशस्य ? संयमिनः
- कदा ? सायम्

**अन्वयः**

दुष्प्रापयशाः श्रान्तवाहनः महिषीसखः सः

सायं संयमिनः तस्य महर्षेः आश्रमं प्रापत् ।

**अन्वयार्थः**

- दुष्प्रापयशाः = अप्रतिमकीर्तिमान् / अन्यदुर्लभकीर्तिः
- श्रान्तवाहनः = यस्य रथाश्वाः क्लान्ताः
- महिषीसखः सः = सपत्नीकः दिलीपः
- सायम् = सायङ्काले
- संयमिनः = नियमवतः

- तस्य महर्षेः = वसिष्ठमुनेः
- आश्रमम् = तपोवनम्
- प्रापत् = प्राप्नोत् ।

**भावार्थः**

दिनावसाने अतुल्यकीर्तिमान् दिलीपराजः राज्ञा सुदक्षिणया सह मुनेः वसिष्ठस्य आवासस्थलम् आसादितवान् । सुदूरप्रयाणात् वहनाच्च रथस्य अश्वाः श्रान्ताः आसन् ।

**समासः वृत्तिश्च**

- दुष्प्रापयशाः
    - दुष्प्रापम् = दुःखेन प्राप्तुं शक्यम् ।
    - दुष्प्रापयशाः = दुष्प्रापं यशः यस्य सः – बहुव्रीहिः
- श्रान्तवाहनः = श्रान्तानि वाहनानि यस्य सः – बहुव्रीहिः
- महिषीसखः = महिष्याः सखा (राजाहःसखिभ्यष्टच्)
- संयमिनः = संयमः अस्य अस्तीति – संयमी, तस्य

=======================================
=

४९. दम्पत्योराश्रमप्राप्तिः

**वनान्तरादुपावृत्तैः समित्कुशफलाहरैः ।**
**पूर्यमाणमदृश्याग्निप्रत्युद्यातैस्तपस्विभिः ॥ ४९ ॥**

**पदच्छेदः**

वनान्तरात्, उपावृत्तैः, समित्कुशफलाहरैः पूर्यमाणम् अदृश्याग्निप्रत्युद्यातैः तपस्विभिः ।

**आकाङ्क्षाक्रमः**

- (प्रापत्)
- कुत्र ? (आश्रमम्)
    - कीदृशम् आश्रमम् ? पूर्यमाणम्
        - कैः ? तपस्विभिः
            - कीदृशैः तपस्विभिः ? समित्कुशफलाहरैः
            - पुनः कीदृशैः तपस्विभिः? उपावृत्तैः
                - कुतः ? वनान्तरात्

**अन्वयः**

वनान्तरात् उपावृत्तैः समित्कुशफलाहरैः अदृश्याग्निप्रत्युद्यातैः तपस्विभिः पूर्यमाणम् (आश्रमं प्रापत्) ।

**प्रतिपदार्थः**

- वनान्तरात् = अन्यस्मात् वनात्
- उपावृत्तैः = ये प्रत्यागतवन्तः, तैः
- समित्कुशफलाहरैः = ये काष्ठानि, दर्भान्, फलानि च आनयन्ति स्म, तैः
- अदृश्याग्निप्रत्युद्यातैः = असंलक्ष्याः अग्नयः यान् प्रति आधावन्ति, तैः
- तपस्विभिः = तापसैः
- पूर्यमाणम् = व्याप्तम्

**भावार्थः**

तपोवनऋषिकुमाराः वनान्तरं गत्वा समिधाः, कुशान्, फलानि च आदाय सायम् आश्रमपरिसरं प्रविशन्ति स्म । [१]अगोचराः श्रौताग्नयः तान् तापसान् प्रत्युद्गच्छन्ति स्म । एवम् आगच्छतः तापसान् सुदक्षिणादिलीपौ ददृशतुः ।

[१] "प्रोष्यागच्छतामाहिताग्नीनामग्नयः प्रत्युद्यान्ति" इति श्रुतेः
कामं पितरं प्रोषितवन्तं पुत्राः प्रत्याधावन्ति ।
एवमेव अग्नयः प्रत्याधावन्ति ....

**समासः वृत्तिश्च**

- वनान्तरात् = अन्यत् वनम् वनान्तरम्, तस्मात्
- समित्कुशफलाहरैः
    - समिधश्च कुशाश्च फलानि च – समित्कुशफलानि,
    - समित्कुशफलाहरैः समित्कुशफलानि आहर्तुं शीलं येषां समित्कुशफलाहराः, तैः
- अदृश्याग्निप्रत्युद्यातैः
    - दृश्याः द्रष्टुं योग्याः ।
    - अदृश्याः न दृश्याः ।
    - अदृश्याग्नयः = अदृश्याश्च ते अग्नयः – कर्मधारयः ।
    - अदृश्याग्निप्रत्युद्यातैः = अदृश्याग्निभिः प्रत्युद्याताः इति अदृश्याग्निप्रत्युद्याताः, तैः – तृतीयातत्पुरुषः ।
- तपस्विभिः = तपः अस्ति येषां ते तपस्विनः, तैः – मदुपर्थे तद्धितान्ताः ।

**कृदन्तानि**

- उपावृत्तैः = उप + आङ् + वृत् "वृतुँ वर्तने" + क्त-प्रत्ययः

---

५०. दम्पत्योराश्रमप्राप्तिः

**आकीर्णमृषिपत्नीनामुटजद्वाररोधिभिः ।**
**अपत्यैरिव नीवारभागधेयोचितैर्मृगैः ॥ ५० ॥**

**पदच्छेदः**

आकीर्णम्, ऋषिपत्नीनाम्, उटजद्वाररोधिभिः, अपत्यैः, इव, नीवारभागधेयोचितैः, मृगैः ।

**आकाङ्क्षाक्रमः**

- प्रापत्
- किम् ? आश्रमम्
    - कीदृशम् आश्रमम् ? आकीर्णम्
        - कैः आकीर्णम् ? मृगैः
            - कीदृशैः मृगैः ? उटजद्वाररोधिभिः
            - पुनः कीदृशैः मृगैः ? नीवारभागधेयोचितैः
            - कैः इव ? अपत्यैः इव
                - कासाम् ? ऋषिपत्नीनाम्

**अन्वयः**

नीवारभागधेयोचितैः उटजद्वाररोधिभिः मृगैः ऋषिपत्नीनाम् अपत्यैः इव आकीर्णम् आश्रमं प्रापत् ।

**अन्वयार्थः**

- नीवारभागधेयोचितैः = ये तृणधान्यांशग्रहणे अभ्यस्ताः, तैः
- उटजद्वाररोधिभिः = ये च पर्णशालानां द्वाराणि अवरुन्धन्ति, तैः
- मृगैः = हरिणैः
- ऋषिपत्नीनाम् = ऋषिभार्याणाम्
- अपत्यैः इव = पुत्रैः इव
- आकीर्णम् = व्याप्तम्
- आश्रमं प्रापत् ।

**भावार्थः**

सायन्तनम् आश्रमदृश्यं वर्ण्यते अत्र । मातरः मृगेभ्यः नीवारधान्यानि नित्यं यच्छन्ति। तद्ग्रहणशीलाः ते मृगाः गृहद्वारेषु तिष्ठन्ति । यथा पुत्राः मातुः सकाशात् अभीष्टं हठात् प्राप्नुवन्ति तथा धान्यानि प्राप्तुं पर्णशालाद्वाराणि अवरुद्ध्य स्थितान् मृगान् दम्पती अपश्यताम् ।

**समासः वृत्तिश्च**

- नीवारभागधेयोचितैः = भागः एव धेयः (अंशः) भागधेयः
  - नीवाराणां भागधेयः – नीवारभागधेयः
  - नीवारभागधेयस्य उचिताः – नीवारभागधेयोचिताः, तैः
- उटजद्वाररोधिभिः
  - उटजानां द्वाराणि – उटजद्वाराणि
  - उटजद्वाररोधिभिः उटजद्वाराणि रोद्धुं शीलं येषां ते – उटजद्वाररोधिनः, तैः
- ऋषिपत्नीनाम् = ऋषीणां पत्नयः, ऋषिपत्नयः, तासाम्

**कृदन्तानि**

- आकीर्णम् = आङ् + कृ + क्त-प्रत्ययः

51. दम्पत्योराश्रमप्राप्तिः –

**सेकान्ते मुनिकन्याभिस्तत्क्षणोज्झितवृक्षकम् ।**
**विश्वासाय विहङ्गानामालवालाम्बुपायिनाम् ॥ ५१ ॥**

**पदच्छेदः**

सेकान्ते मुनिकन्याभिः तत्क्षणोज्झितवृक्षकम् विश्वासाय विहङ्गानाम् आलवालाम्बुपायिनाम् ।

**आकाङ्क्षाक्रमः**

- प्रापत्
- कम्/ कुत्र प्रापत् ?आश्रमम्

- कदा ? सेकान्ते
- कीदृशम् आश्रमम् ? तत्क्षणोज्झितवृक्षकम्
- काभिः (तत्क्षणमेव उज्झितम्) ? मुनिकन्याभिः
- किमर्थम्(तत्क्षणमेव उज्झितम्) ? विश्वासाय
    - केषां विश्वासाय? विहङ्गानाम्
        - कीदृशानां विहङ्गानाम् ? आलवालाम्बुपायिनाम्

**अन्वयः**

सेकान्ते मुनिकन्याभिः आलवालाम्बुपायिनां विहङ्गानां विश्वासाय तत्क्षणोज्झितवृक्षकम् (आश्रमं सः प्रापत्) ।

**अन्वयार्थः**

- सेकान्ते = वृक्षमूल-सेचनावसाने
- मुनिकन्याभिः = आश्रमकुमारीभिः
- आलवालाम्बुपायिनाम् = आवापप्रदेशेषु स्थितस्य जलस्य पानं कुर्वतां (खगानाम्) [आलवालम् – तरुमूलसेचनार्थं स्वल्पजलाधारः]
- विहङ्गानाम् = पक्षिणाम्
- विश्वासाय = विश्रम्भाय / श्रद्धायै
- तत्क्षणोज्झितवृक्षकम् = यस्मिन् क्षेत्रे लघुवृक्षाः तत्क्षणे एव त्यक्ताः भवन्ति तत् क्षेत्रम् (आश्रमम्)
- आश्रमं प्रापत् ।

**भावार्थः**

अस्मिन् श्लोके अपि आश्रमदृश्यं एव वर्ण्यते ।आश्रमस्थाः कुमार्यः लघुवृक्षान् जलेन सिञ्चन्ति ।

आवापप्रदेशेषु यत् जलं अवशिष्टं भवति तत् पातुं पक्षिणः विश्रम्भतया आगच्छेयुः इति मत्वा

ताः कन्याः जलसेचनानन्तरं ततः झटिति निर्गच्छन्ति । तादृशाः लघुवृक्षाः यत्र आसन् तम् आश्रमं दिलीपः प्रापत् ।

**समासः वृत्तिश्च**

- सेकान्ते = सेकस्य अन्तम्, तस्मिन् – षष्ठीतत्पुरुषः ।
- मुनिकन्याभिः = मुनीनां कन्याः, ताभिः- षष्ठीतत्पुरुषः।
- आलवालाम्बुपायिनाम्
    - आलवालाम्बु = आलवालस्य अम्बु – षष्ठीतत्पुरुषः।
    - पायिनः= पातुं शीलं येषां ते – तद्धितान्तः।
    - आलवालाम्बुपायिनाम् = आलवालाम्बु पायिनः, तेषाम् – षष्ठीतत्पुरुषः।
- तत्क्षणोज्झितवृक्षकम्
    - तत्क्षणोज्झितवृक्षकम्= तत्क्षणे उज्झिताः वृक्षकाः यस्मिन् (आश्रमे) सः = तत्क्षणोज्झितवृक्षकः, तम्

**कृदन्तः**

- उज्झितः =उज्झ् "उज्झँ उत्सर्गे" + क्तप्रत्ययः।

**तद्धितः**

- वृक्षकाः – लघु-वृक्षाः – ह्रस्वार्थे क-प्रत्ययः।
- पायी = यस्मिन् पातुं शीलम् अस्ति।

========================================

52. तत्रत्यानां मृगाणां रोमन्थवर्तनम् –

**आतपात्ययसंक्षिप्तनीवारासु निषादिभिः ।**
**मृगैर्वर्तितरोमन्थमुटजाङ्गनभूमिषु ॥ ५२ ॥**

**पदच्छेदः**

आतपात्ययसंक्षिप्तनीवारासु ,निषादिभिः, मृगैः, वर्तितरोमन्थम्, उटजाङ्गनभूमिषु ।

**आकाङ्क्षाक्रमः**

- प्रापत्
  - कम् / कुत्र प्रापत्? आश्रमम्
    - कीदृशम् आश्रमम् ? वर्तितरोमन्थम्
      - कैः वर्तितरोमन्थम् ? मृगैः
        - कीदृशैः मृगैः ? निषादिभिः
          - कुत्र निषादिभिः ? उटजाङ्गनभूमिषु
            - कीदृशीषु उटजाङ्गनभूमिषु ? आतपात्ययसंक्षिप्तनीवारासु

**अन्वयः**

आतपात्ययसंक्षिप्तनीवारासु उटजाङ्गनभूमिषु निषादिभिः मृगैः वर्तितरोमन्थम् आश्रमं प्रापत् ।

**अन्वयार्थः**

- आतपात्ययसंक्षिप्तनीवारासु = आतपस्य अपगमे सति यासु (भूमिषु) तृणधान्यानि राशीकृतानि
- उटजाङ्गनभूमिषु = पर्णशालानाम् अजिरस्य भूमिषु / पर्णशालानाम् बहिर्भागेषु
- निषादिभिः = उपविष्टैः
- मृगैः = हरिणैः
- वर्तितरोमन्थम् = यस्मिन् आश्रमे हरिणैः अटनावसरे चर्वितानां नीवारधान्यानां, उपविश्य पुनश्चर्वणं क्रियते तम्
- आश्रमम् प्रापत् ।

**भावार्थः**

अस्मिन् श्लोके आश्रमस्य अपरं मनोहरं दृश्यं वर्ण्यते । अत्र वसिष्ठमुनेः आश्रमस्य पर्णशालायां चत्वरप्रदेशेषु तृणधान्यानि

राशीकृतानि सन्ति । आतपस्य अपगमे सति, मृगाः तत्र रोमन्थाय सुखेन उपविष्टाः । एतद् सुन्दरं दृश्यं दम्पती अपश्यताम् ।

**समासः वृत्तिश्च**

- आतपात्ययसंक्षिप्तनीवारासु
    - आतपात्ययः =आतपस्य अत्ययः – षष्ठीतत्पुरुषः ।
    - आतपात्ययसंक्षिप्तनीवारासु = आतपात्यये संक्षिप्ताः नीवाराः यासु ताःआतपात्ययसंक्षिप्तनिवाराः, तासु – बहुव्रीहिः ।
- उटजाङ्गनभूमिषु = उटजानां अङ्गनभूमयः, तासु – षष्ठीतत्पुरुषः ।
- वर्तितरोमन्थम् = वर्तितः रोमन्थः यस्मिन् सः वर्तितरोमन्थः, तम् – बहुव्रीहिः ।

**कृदन्तानि**

- संक्षिप्ताः=क्षिप् “क्षिप प्रेरणे” + क्त प्रत्ययः । लट्लकारे क्षिपति / क्षिपते ।
- वर्तितः = वृत् “वृतु वर्तने” + क्त प्रत्ययः । लट्लकारे वर्तते ।

**तद्धितान्तः**

- निषादिभिः =निषीदन्ति (उपविशन्ति), तच्छीलाः इति निषादिनः, तैः ।
- आतपः = आ समन्तात् तापयति /सन्तापं जनयति इति ।

=======================================

53. आहुतिगन्धयुत-सुरभिमता होमधूमः –

**अभ्युत्थिताग्निपिशुनैरतिथीनाश्रमोन्मुखान् ।**
**पुनानं पवनोद्धूतैर्धूमैराहुतिगन्धिभिः ॥ ५३ ॥**

**पदच्छेदः**

अभ्युत्थित-अग्निपिशुनैः अतिथीनाश्रमोन्मुखान्पुनानं पवनोद्धूतैः धूमैः आहुतिगन्धिभिः ।

**आकाङ्क्षाक्रमः**

- प्रापत्
  - कः ? (दिलीपः)
  - कुत्र प्रापत् ? आश्रमम्
    - कीदृशम् आश्रमम्? पुनानम्
      - कान् (पुनाति) ? अतिथीन्
        - कीदृशान् अतिथीन् ? आश्रमोन्मुखान्
      - कैः (पुनाति) ? धूमैः
        - कीदृशैः धूमैः ? आहुतिगन्धिभिः
        - पुनः कीदृशैः धूमैः ? पवनोद्धूतैः

पुनः कीदृशैः धूमैः ? अभ्युत्थित-अग्निपिशुनैः

**अन्वयः**

अभ्युत्थिताग्निपिशुनैः पवनोद्धूतैः आहुतिगन्धिभिः धूमैः आश्रमोन्मुखान् अतिथीन् पुनानम् (आश्रमम् दिलीपः प्रापत्) ।

**अन्वयार्थः**

- अभ्युत्थिताग्निपिशुनैः – प्रज्वलितैः अग्निसूचकैः
- पवनोद्धूतैः – वायुना प्रसृतैः

- आहुतिगन्धिभिः धूमैः – हवनगन्धेन मिश्रितैः धूमैः; आहुतिः – मन्त्रपूर्वकम् अग्नौ हविष्यक्षेपः ।
- आश्रमोन्मुखान् – मुनिवसतिं प्रति आगच्छतः
- अतिथीन् पुनानम् – अभ्यागतान् पवित्रीकुर्वाणं
- (आश्रमं प्रापत्)

**भावार्थः**

वसिष्ठाश्रमे यज्ञकुण्डतः उत्थितः आहुतिगन्धयुक्तः धूमः पवनप्रसृतः सन् आश्रमपरिसरं प्रविशन्तौ रथारूढौ अतिथी सुदक्षिणोदिलीपौ पावयन् इदं सूचयति यत् आश्रमे मुनयः विधिपूर्वकं यागं अनुतिष्ठन्ति इति । यदा ते अग्नौ आहुतिं जुह्वति तदा समिद्ध-होमाग्नितः *अभ्युत्थितः पवित्रः गन्धमयः धूमः वायुना आश्रमं परितः इतस्ततः नीतः सन् सर्वान् पुनाति ।
[* अत्र 'अभ्युत्थित'पदस्य वाचिकार्थः लाक्षणिकार्थः च ग्रहीतुं शक्यः । <u>अभ्युत्थितः धूमः अभ्यागतं दिलीपं पुनाति</u> इत्यनेन दिलीपस्य श्रेयस्त्वम् आहुत्यग्नेः श्रेष्ठत्वं च लक्ष्यते । तदन्वये शुद्धिमति प्रसूतः शुद्धिमत्तरः – श्लो. १२ ।
आदरप्रकटनाय अतिथौ समागते अभ्युत्थानम्, अतिथौ प्रस्थिते आपृच्छा इति प्राचीना परम्परा । ]

**समासः वृत्तिश्च**

- अभ्युत्थिताग्निपिशुनैः
  - अभ्युत्थिताः = अभितः उत्थिताः
  - अभ्युत्थिताग्नयः = अभ्युत्थिताः च ते अग्नयः – कर्मधारयः ।
  - अभ्युत्थिताग्निपिशुनैः= अभ्युत्थिताग्नीनां पिशुनाः, तैः – षष्ठीतत्पुरुषः ।

- पवनोद्धूतैः = पवनेन उद्धूताः, तैः – तृतीयातत्पुरुषः ।
- आहुतिगन्धिभिः
  - आहुतिगन्धः = आहुतेः गन्धः – षष्ठीतत्पुरुषः ।
  - आहुतिगन्धिभिः = आहुतिगन्धः एषाम् अस्ति इति आहुतिगन्धिनः, तैः – मतुबर्थे तद्धितान्तः ।
- आश्रमोन्मुखान्
  - उन्मुखाः = उदगतं मुखं येषां ते – बहुव्रीहिः ।
  - आश्रमोन्मुखान् = आश्रमस्य उन्मुखाः, तान् – षष्ठीतत्पुरुषः ।

======================================

54. आश्रमप्राप्त्यनन्तरं रथादवतरणमित्याह –

**अथ यन्तारमादिश्य धुर्यान्विश्रामयेति सः ।**

**तामवारोहयत्पत्नीं रथादवततार च ॥ ५४ ॥**

**पदच्छेदः**

अथ , यन्तारम् , आदिश्य, धुर्यान्, विश्रामय, इति, सः,ताम्, अवारोहयत्, पत्नीम्, रथात्, अवततार, च ।

**आकाङ्क्षाक्रमः**

- अवततार
- कः अवततार? सः (दिलीपः)
  - किम् कृत्वा अवततार? आदिश्य
    - कः आदेशः? “धुर्यान् विश्रामय” इति
    - कम् आदिश्य अवततार? यन्तारम्
  - पुनः किम् अकरोत् ? अवाहरोहयत्
    - काम् ? पत्नींताम् (सुदक्षिणाम् )

- कस्मात् अवारोहयत्? रथात्
- पुनः किम् अकरोत् ? स्वयं च अवततार ।

**अन्वयः**

अथ "धुर्यान् विश्रामय" इति यन्थारम् आदिश्य, सः (दिलीपः) पत्नीम् ताम् (रथात्) अवारोहयत् (स्वयम्) (रथात्) अवततार च ।

**अन्वयार्थः**

- अथ -अनन्तरम्
- यन्थारम् – सारथिम्
- धुर्यान् – अश्वान्
- विश्रामय इति – अश्वानां श्रमपरिहारं कल्पयइति
- आदिश्य – आज्ञाप्य
- पत्नीम् – भार्याम्
- अवारोहयत् -अवतारितवान्, अवतरितुंसाहाय्यम् कृतवान्
- रथात् – स्यन्दनात्
- अवततार – अवरोहणं कृतवान्

**भावार्थः**

दिलीपस्य रथः आश्रमं प्रति आगतः । राजा दिलीपः दीर्घप्रयाणेन जलतृणादिदानेन श्रान्तानां रथाश्वानां श्रमापगमः यथा भवेत् तथा कल्पय इति सारथिम् आज्ञापयत् । रथात् अवतरणे पत्न्याः सुदक्षिणायाः साहाय्यम् कृत्वा अनन्तरं स्वयम् रथात् अवतीर्णवान् दिलीपराजः ।

**समासः वृत्तिश्च**

- धुर्यान् – धुरम् वहन्ति इति धुर्याः, तान् धुर्यान्

====================================

55.

**तस्मैसभ्याः सभार्याय गोप्त्रे गुप्ततमेन्द्रियाः ।**

**अर्हणामर्हते चक्रुर्मुनयो नयचक्षुषे ॥ ५५ ॥**

**पदच्छेदः**

तस्मै सभ्याः सभार्याय गोप्त्रे गुप्ततमेन्द्रियाः अर्हणाम् अर्हते चक्रुः मुनयः नयचक्षुषे ।

**आकाङ्क्षाक्रमः**

- चक्रुः[ लिट् ]
- के ? मुनयः
  - कीदृशाः ? सभ्याः
  - पुनःकीदृशाः ? गुप्ततमेन्द्रियाः
- मुनयः कां चक्रुः ? अर्हणाम्
- कस्मै? तस्मै
  - कीदृशाय ? सभार्याय
  - पुनः कीदृशाय ? गोप्त्रे
  - पुनः कीदृशाय ? अर्हते
  - पुनः कीदृशाय ? नयचक्षुषे

**अन्वयः**

गुप्ततमेन्द्रियाः सभ्याः मुनयः सभार्याय गोप्त्रे अर्हते नयचक्षुषे तस्मै अर्हणां चक्रुः।

**अन्वयार्थः**

- चक्रुः
- अर्हणाम् = पूजाम्
- गुप्ततमेन्द्रियाः = अत्यन्तं नियमितेन्द्रियाः
- सभ्याः = सभायां साधवः

- सभार्याय = सपत्नीकाय
- गोप्त्रे= रक्षकाय
- अर्हते = प्रशस्ताय
- नयचक्षुषे = नयशास्त्रमेव चक्षुः तत्त्वावेदकं प्रमाणं यस्य, तस्मै । नीतिपरायणाय

**भावार्थः**

अस्मिन् श्लोके मुनयः कथं राज्ञः राज्ञ्याः च पूजां कृत्वा स्वागतं कृतवन्तः इति वर्णितमस्ति । मुनयः अतिशयेन तेषाम् इन्द्रियाणां नियमनं कृतवन्तः । अपि च तेषां लोकज्ञानम् अपि सम्यक् आसीत् । अतः एव ते राज्ञः स्वागतं कर्तुम् अर्हाः इति सरलः अर्थः ।

- **गुप्ततमेन्द्रियाः गोप्त्रे** – तपश्शीलाः मुनयः आत्मज्ञानेन स्वस्य इन्द्रियाणि दमयन्ति ; आत्मानं गोपयन्ति / रक्षन्ति । अत एव तेषां तपःशक्तिः अत्यधिका भवति यां च शक्तिं ते लोकहिताय उपयुञ्जते । गोप्ता दिलीपः नयविद्यया दण्ड्यान् दण्डयन् सुष्ठु प्रजाः राष्ट्रं च रक्षति ।
- **सभ्याः सभार्याय** – मुनयस्तु प्रकृत्या साधवः ; अपि च ते सभायाम् साधवः । देशकालविदः ते औच्यित्यानौचित्यं जानन्ति इत्यर्थः ।
- **मुनयः नयचक्षुषे** – मननात् मौनात् च मुनयः । ते वेदार्थानां अध्येतारः तद्-मननशीलाः भवन्ति । तेषां श्रुतिः एवे चक्षुः । राज्ञः चक्षुः नयशास्त्रम्, मन्त्रालोचनम्, गुप्तचराः च भवन्ति ।
- अर्हते तस्मै अर्हणां चक्रुः – पूज्याय तस्मै पूजाम् अकुर्वन्
- **शब्दालङ्कारः** – सभ्याः सभार्याय ; गोप्त्रेगुप्ततमे..; अर्हणाम् अर्हते मुनयः नयचक्षुषे । वर्णानां पुनरुक्तिः अनुप्रासः।

**समासः वृत्तिश्च**

- गुप्ततमेन्द्रियाः
  - गुप्ततमम् =अतिशयेनगुप्तम् – तमप् प्रत्ययः (तद्धितः) ।
  - गुप्ततमेन्द्रियाः = गुप्ततमानि इन्द्रियाणि येषाम् – बहुव्रीहिः ।

========================================

56. सायङ्कालीनक्रियान्ते अरुन्धतीसहितस्य गुरोः दर्शनम् –

**विधेः सायन्तनस्यान्ते स ददर्श तपोनिधिम् ।**
**अन्वासितमरुन्धत्या स्वाहयेव हविर्भुजम् ॥ ५६ ॥**

**पदच्छेदः**

विधेः, सायन्तनस्य, अन्ते, सः, ददर्श, तपोनिधिम्,अन्वासितम्, अरुन्धत्या, स्वाहया, इव, हविर्भुजम् ।

**आकाङ्क्षाक्रमः**

- ददर्श- अपश्यत्
  - कः ददर्श ? सः (दिलीपः )
  - कं ददर्श ? तपोनिधिम् (वसिष्ठम् )
    - कीदृशं तपोनिधिम् ? अन्वासितम्
      - कया अन्वासितम् ? अरुन्धत्या
    - कथमिव ददर्श ? हविर्भुजम् इव
      - कीदृशम् हविर्भुजम् ? (अन्वासितम् )
        - कया अन्वासितम् ? स्वाहया
      - कदा ददर्श ? अन्ते
        - कस्य अन्ते ? सायन्तनस्य विधेः

**अन्वयः**

सायन्तनस्य विधेः अन्ते स्वाहया (अन्वासितम्) हविर्भुजम् इव अरुन्धत्या अन्वासितं तपोनिधिं सः ददर्श ।

**अन्वयार्थः**

- सायन्तनस्य = सायंकालिकस्य
- विधेः = जपहोमादेः अनुष्ठानस्य
- अन्ते = अवसाने
- स्वाहया= स्वाहादेव्या
- अन्वासितम् = उपासितम्
- हविर्भुजम् = साक्षात् अग्निदेवम् (हवनीयं द्रव्यं भुनक्ति इति हविर्भुक्)
- इव = यथा, तथा
- अरुन्धत्या = अरुन्धती नाम्न्या स्वपत्न्या
- अन्वासितम् = पश्चादुपवेशनेन उपसेवितम्
- तपोनिधिम् = तपसः आकरभूतं वसिष्ठमुनिम्
- सः= राजा दिलीपः
- ददर्श = अपश्यत्

**भावार्थः**

स राजा दिलीपः आश्रमस्थैः मुनिभिः विधिवत् कृतां पूजां स्वीकृतवान् । तदनन्तरं मुनेः दर्शनाय अगच्छत् । तत्र सायंकालिकस्य जपहोमाद्यनुष्ठानस्य अवसाने अरुन्धत्या पश्चादुपवेशनेन उपसेवितम् तपोनिधिम् वसिष्ठम्, यथा स्वाहादेव्या उपासितम्, अत एव इतोपि प्रज्वालितं, साक्षात् अग्निदेवम् इव अपश्यत् ।

**विशेषविषयाः**

- स्वाहा-अथाग्नायी स्वाहा च हुतभुक्प्रिया इत्यमरः।
- “समित्पुष्पकुशाग्न्यम्बुमृदन्नाक्षतपाणिकः।

जपं होमं च कुर्वाणो नाभिवाद्यो द्विजो भवेत्।" इति अनुष्ठानस्य मध्ये अभिवादननिषेधात् विधेः अन्ते ददर्श इति उक्तम्।

- अन्वासनं चात्र पतिव्रताधर्मत्वेनोक्तं न कर्माङ्गत्वेन ।

**समासः वृत्तिश्च**

- सायन्तनस्य= सायं भवः,सायंतनः, तस्य – तद्धितान्तः
- तपोनिधिम्= तपसां निधिः, तपोनिधिः, तम् – षष्ठीतत्पुरुषः
- हविर्भुजम् = हविःभुनक्ति इति हविर्भुक्, तम् – उपपदसमासः

**कृदन्तानि**

- अन्वासितः = अनु-उपसर्गपूर्वकः 'आस-उपवेशने'+ क्त प्रत्ययः।लटि, आस्ते।

========================================
====

57. परस्परं सम्भावनम् –

**तयोर्जगृहतुः पादान् राजा राज्ञी च मागधी ।**

**तौ गुरुर्गुरुपत्नी च प्रीत्या प्रतिननन्दतुः ॥ ५७ ॥**

**पदच्छेदः**

तयोः, जगृहतुः, पादान्, राजा, राज्ञी, च, मागधी, तौ, गुरुः, गुरुपत्नी, च,प्रीत्या, प्रतिननन्दतुः ।

**आकाङ्क्षाक्रमः**

- जगृहतुः
  - कौ जगृहतुः ? राजा राज्ञी
    - कीदृशी राज्ञी ? मागधी
  - कान् जगृहतुः? पादान्

- कयोः पादान्? तयोः ( गुरोः गुरुपत्न्याः च)
  - प्रतिननन्दतुः
    - कौ प्रतिननन्दतुः ? गुरुःगुरुपत्नी च
    - कथम्? प्रीत्या

**अन्वयः**

मागधी राज्ञी राजा च तयोः पादान्जगृहतुः । गुरुः गुरुपत्नी च प्रीत्या तौ प्रतिननन्दतुः ।

**अन्वयार्थः**

- मागधी राज्ञी = मगधराजपुत्री दिलीपस्य भार्या सुदक्षिणा
- राजा च = दिलीपराजः च
- तयोः = गुरुगुरुपत्न्योः
- पादान् = चरणान्
- जगृहतुः = स्पृष्टवन्तौ
- गुरुः गुरुपत्नी च – अरुन्धतीवसिष्ठौ
- प्रीत्या – स्नेहवचसा
- तौ – दम्पती (सुदक्षिणादिलीपौ)
- प्रतिननन्दतुः – सम्भावितवन्तौ

**भावार्थः**

सुदक्षिणादिलीपौ गुरुं गुरुमातरं च सादरं चरणस्पर्शपूर्वकं नमस्कृतवन्तौ । अरुन्धतीवसिष्ठौ अपि प्रीतिपूर्वकम् आशीर्वचनेन तौ समभावयताम् ।

**समासः वृत्तिश्च**

- मागधी – मगधस्य इयम्
- गुरुपत्नी – गुरोः पत्नी

**क्रियापदम्**

- जगृहतुः- ग्रह् (गृह्णाति) लिट् प्रथम.पु.द्वि.व.
- प्रतिननन्दतुः – प्रति + नन्द् (नन्दति) लिट्प्रथम.पु.द्वि.व.

============================================
=====

58. वसिष्ठो दिलीपंराज्यविशयककुशलं पृष्टवानित्याह-

**तमातिथ्यक्रियाशान्तरथक्षोभपरिश्रमम्**
**पप्रच्छ कुशलं राज्ये राज्याश्रममुनिं मुनिः ॥ ५८ ॥**

**पदच्छेदः**

तम्, आतिथ्यक्रियाशान्त-रथक्षोभपरिश्रमम्, पप्रच्छ, कुशलम्, राज्ये, राज्याश्रमममुनिम्, मुनिः

**आकाङ्क्षाक्रमः**

- पप्रच्छ ।
  - कः पप्रच्छ ? मुनिः पप्रच्छ ।
  - कं पप्रच्छ? तम् दिलीपम् ।
    - कीदृशं तम्? राज्याश्रममुनिम् दिलीपम् ।
    - पुनः कीदृशं तम् ? आतिथ्यक्रियाशान्तरथक्षोभपरिश्रमम्
  - किम् पप्रच्छ ? कुशलम् ।
    - कुत्र कुशलम् ? राज्ये

**अन्वयार्थः**

- मुनिः – वसिष्ठमहर्षिः
- आतिथ्यक्रियाशान्तरथक्षोभपरिश्रमम् -अतिथिसत्कारं प्राप्य रथप्रयाणेन जाता देहक्लान्तिः यस्य परिहृता, तं दिलीपमहाराजम्
- राज्याश्रममुनिम् – यस्य राज्यम् एव आश्रमः, मुनितुल्यं राजानम्
- तम् -दिलीपम्

- राज्ये – देशे
- कुशलम् – क्षेमम्
- पप्रच्छ – अपृच्छत्

**अन्वयः**

मुनिः आतिथ्यक्रियाशान्तरथक्षोभपरिश्रमं राज्याश्रममुनिं तम् (दिलीपम्), राज्ये कुशलं पप्रच्छ ।

**भावार्थः**

वसिष्ठमहर्षिः स्वभार्यया सह सभार्यस्य दिलीपस्य आतिथ्यम् अकरोत् । रथप्रयाणात् जातः देहक्लेशः परिहृतः । तदनन्तरं मुनिः रघुवंशकेतुं दिलीपं प्रति *राज्यस्य क्षेमसमाचारम् अपृच्छत् । अत्र दिलीपः महाराजः चेदपि 'राज्याश्रममुनिः' इति वर्णितः । सः राजपीठं अलङ्करोति, किन्तु मुनिः इव अनासक्तः सन् कर्तव्यताभावेन राजकार्यं निर्वहति इति तात्पर्यम् ।

**राज्ये कुशलम्** –

*स्वाम्यमात्यपुरं राष्ट्रं कोशदण्डौ तथा सुहृत् ।
सप्तैतानि समस्तानि लोकेऽस्मिन् राज्यमुच्यते ॥

**समासः वृत्तिश्च**

- आतिथ्यक्रियाशान्तरथक्षोभपरिश्रमम्
  - अतिथये इदम् – आतिथ्यम्
  - आतिथ्यस्य क्रिया – आतिथ्यक्रिया
  - आतिथ्यक्रियया शान्तः इति आतिथ्यक्रियाशान्तः ।
  - रथस्य क्षोभः – रथक्षोभः
  - रथक्षोभेण परिश्रमः – रथक्षोभपरिश्रमः
- आतिथ्यक्रियाशान्तः रथक्षोभपरिश्रमः यस्य सः = आतिथ्यक्रियाशान्तरथक्षोभपरिश्रमः, तम्

- राज्याश्रममुनिम्
    - राज्यम् एव आश्रमः – राज्याश्रमः
    - राज्याश्रमे मुनिः – राज्याश्रममुनिः, तम्

=========================================
=======

59. वसिष्ठस्य कुशलप्रश्नानन्तरं दिलीपस्य उत्तरदानोपक्रमः

**अथाथर्वनिधेस्तस्य विजितारिपुरः पुरः ।**
**अर्थ्यामर्थपतिर्वाचमाददे वदतां वरः ॥ ५९ ॥**

**पदच्छेदः**

अथ, अथर्वनिधेः, तस्य, विजितारिपुरः, पुरः, अर्थ्याम्, अर्थपतिः, वाचम्, आददे, वदतां, वरः।

**आकाङ्क्षाक्रमः**

- आददे [ जगृहे ]
    - कां आददे? वाचम्
        - कीदृशीं वाचम् ? अर्थ्याम्
    - कुत्र आददे? पुरः
        - कस्य पुरः? तस्य
            - कीदृशस्य तस्य? अथर्वनिधेः
        - कः आददे ? अर्थपतिः
            - कीदृशः अर्थपतिः? वरः
                - केषां वरः? वदताम्
            - पुनः कीदृशः अर्थपतिः ? विजितारिपुरः
        - कदा आददे? अथ

**अन्वयः**

अथ विजतारिपुरः वदतां वरः अर्थपतिः अथर्वनिधेः तस्य पुरः अर्थ्याम् वाचं आददे ।

**अन्वयार्थः**

- अथ - कुशलप्रश्नानन्तरम्
- विजतारिपुरः- य़ेन शत्रूणां नगराणि स्वायत्तीकृतानि सः(दिलीपराजः)
- वदतां वरः – वक्तृणां श्रेष्ठः
- अर्थपतिः – विभवस्य स्वामी (राजा)
- अथर्वनिधेः – अथर्ववेदस्य आकरभूतस्य
- तस्य – वसिष्ठस्य
- पुरः – अग्रे
- अर्थ्याम्- अर्थादनपेताम् - अर्थवत्
- वाचम्- वाणीम्
- आददे- जगृहे

**भावार्थः**

दिलीपचक्रवर्तिना शत्रूणां नगराणि स्वायत्तीकृतानि आसन् । गुरोः कुशलप्रश्नानन्तरं सः विभवस्य स्वामी, वक्तृणां श्रेष्ठः राजा,

अथर्ववेदस्य मुनेः, वसिष्ठस्य अग्रे अर्थ्यां वाणीं वक्तुम् उपक्रान्तवान् ।

**विशेषविषयाः**

- अथर्वनिधेः इत्यनेन पुरोहित-कृत्याभिज्ञत्वात् तत्कर्मनिर्वाहकत्वं मुनेः अस्ति इति सूच्यते ।

यथाह कामन्दकः-" त्रय्यां दण्डनीत्यां च कुशलः स्यात्पुरोहितः ।

अथर्वविहितं कुर्यान्नित्यं शान्तिकपौष्टिकम्।।" इति।।

- चाणक्यनीतिः

राजाराष्ट्रकृतं पापं राज्ञः पापं पुरोहितः।

भर्ता च स्त्रीकृतं पापं शिष्यपापं गुरुस्तथा ।।६।१०।।(उपभुङ्क्ते /सहते/वहति)

प्रजाभिः कृतं पापफलं राजा उपभुङ्क्ते

राज्ञा कृतं पापफलं पुरोहितः उपभुङ्क्ते

स्त्रिया कृतं पापफलं भर्ता उपभुङ्क्ते

शिष्येण कृतं पापफलं गुरु उपभुङ्क्ते ।

राज्ञः दिलीपस्य महत् दायित्वं भवति । ततोऽपि दायित्वान् अस्ति कुलगुरुः वसिष्ठमुनिः । अथर्ववेदनिधिः वसिष्ठमहर्षिः चक्रवर्तिनः कुशलमार्गदर्शनेन स्वपौरोहित्यदायित्यं निर्वहति इति तात्पर्यम् ।

- **अर्थ्यां वाचम् आददे** – अर्थात् अनपेतां वाणीम्

अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत् । स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ॥ श्रीमद्भगवद्गीता १५/१७

2. अत्र, अर्थ्या इति यत्प्रत्ययः।

**समासःवृत्तिश्च**

- विजितारिपुरः

- अरिपुराणि= अरीणां पुराणि – षष्ठीतत्पुरुषः ।
    - विजितारिपुरः = विजितानि अरिपुराणि येन सः – बहुव्रीहिः।
- अर्थपतिः= अर्थस्य पतिः – षष्ठीतत्पुरुषः ।
- अथर्वनिधेः = अथर्वणः निधिः, तस्य – षष्ठीतत्पुरुषः ।
- अर्थ्याम् = अर्थात् अनपेता अर्थ्या, ताम्

**क्रियापदम्**

- आददे = आ+ (दा-दाने,)लिटिददौ/ ददे, लटिददाति/ दत्ते

======================================

60. दिलीपः पञ्चभिः श्लोकैः राज्यं कथं कुशलम् अस्ति इति वर्णयति ।

**उपपन्नं ननु शिवं सप्तस्वङ्गेषु यस्य मे ।**
**दैवीनां मानुषीणां च प्रतिहर्ता त्वमापदाम् ॥ ६०॥**

**पदच्छेदः**

उपपन्नम्, ननु, शिवम्, सप्तसु, अङ्गेषु, यस्य, मे, दैवीनाम्, मानुषीणम्, च, प्रतिकर्ता, त्वम्, आपदाम् ।

**आकाङ्क्षाक्रमः**

- उपपन्नम् (अस्ति) ननु
    - किम् ? शिवम्
        - कस्य ? मे
    - कुत्र ? अङ्गेषु
        - कतिषु ? सप्तसु

- प्रतिकर्ता (असि)
  - कः ? त्वम्
  - कासाम् ? आपदाम् [ आपद्दकारान्तः स्त्रीलिङ्गः ]
    - कीदृशीनाम् ? दैवीनाम्
    - पुनः कीदृशीनाम् ? मानुषीणां च

**अन्वयार्थः**

- सप्तसु अङ्गेषु = राज्यस्य सप्तसु अङ्गेषु ।
  'स्वाम्यमात्यसुहृत्कोशराष्ट्रंदुर्गबलानि च। सप्ताङ्गानि' इत्यमरः।

स्वामी, अमात्यः, सुहृत्, कोशः, राष्ट्रम्, दुर्गम्, बलम् ।

- शिवम् = मङ्गलम्, कुशलम्
- उपपन्नम् = युक्तम्
- ननु = एव
- दैवीनाम् = देवेभ्यः आगतानाम्
- मानुषीणाम् = मनुषेभ्यःआगतानाम्
  आपदाम् = व्यसनानाम्
- प्रतिकर्ता = यः निवारयति

**अन्वयः**

सप्तसु अङ्गेषु मे शिवम् उपपन्नं ननु । यस्य मे दैवीनां मानुषीणां च आपदाम् त्वं प्रतिकर्ता ।

**भावार्थः**

दिलीपः आह – 'हे गुरो, त्वयि रक्षके सति दैव्यः आपदः मानुष्यः आपदः वा मां कथं नु बाधेरन् ? सर्वासाम् अपि आपदां निवारकः त्वम् अतः मम स्वाम्यमात्यादिषु सप्तसु अङ्गेषु भद्रं भवति इति कोऽत्र सन्देहः ।'

- दैव-मानुष-व्यसनानि कानि इति कामन्दकनीतौ –

"हुताशनो जलं व्याधिर्दुर्भिक्षं मरणं तथा।
इति पञ्चविधं दैवं मानुषं व्यसनं ततः ।
आयुक्तकेभ्यश्चौरेभ्य: परेभ्यो राजवल्लभात् ।
पृथिवीपतिलोभाच्च नराणां पञ्चधा मतम्।।"

========================================

61. क्षात्रबलात् ज्यायः ब्रह्मबलम् इत्याह दिलीपः -

**तव मन्त्रकृतो मन्त्रैर्दूरात्प्राशमितारिभिः ।**
**प्रत्यादिश्यन्त इव मे दृष्टलक्ष्यभिदः शराः ॥ ६१ ॥**

**पदच्छेदः**

तव मन्त्रकृतः मन्त्रैः दूरात् प्राशमितारिभिः प्रत्यादिश्यन्ते इव मे दृष्टलक्ष्यभिदः शराः ।

**आकाङ्क्षाक्रमः**

- प्रत्यादिश्यन्ते इव
  - के ? शराः
    - कस्य ? मे
    - कीदृशाः शराः ? दृष्टलक्ष्यभिदः

- कैः ? मन्त्रैः (हेतुस्तृतीया)
  - कस्य मन्त्रैः ? तव
    - कीदृशस्य तव ? मन्त्रकृतः
  - कीदृशैः मन्त्रैः ? प्रशमितारिभिः
    - कुतः प्रशमितारिभिः ? दूरात्

**अन्वयः**

दूरात् प्रशमितारिभिः मन्त्रकृतः तव मन्त्रैः दृष्टलक्ष्यभिदः मे शराः प्रत्यादिश्यन्ते इव ।

**अन्वयार्थः**

- दूरात् – परोक्षे एव – यथा दृष्टिगोचरं न भवति तथा
- प्रशमितारिभिः – विदारिताः शत्रवः यैः तादृशैः (मन्त्रैः)
- मन्त्रकृतः – मन्त्राणां स्रष्टुः प्रयोक्तुः वा
- तव – वसिष्ठस्य
- मन्त्रैः – (वसिष्ठस्य) मन्त्रैः
- दृष्टलक्ष्यभिदः – अक्ष्णोः पुरतः दृश्यमान-लक्ष्यस्य वेधकाः
- मे – मम (दिलीपस्य)
- शराः – बाणाः
- प्रत्यादिश्यन्ते – निराकृताः भवन्ति
- इव – मम शराः व्यर्थाः इति भासते

**भावार्थः**

हे गुरो ! मन्त्रप्रयोक्तुः तव मन्त्राणां प्रभावादेव त्वयि सति मम बाणाः निष्प्रयोजनाः इव । तव मन्त्रबलात् परोक्षतया एव शत्रवः नश्यन्ति । मम शराः यत् प्रत्यक्षं लक्ष्यभेदनं कुर्वन्ति तत् पिष्टपेषणन्यायेन मृतेषु शत्रुशरीरेषु प्रहाराः इव निष्फलाः भवन्ति । हे गुरो ! तव मन्त्रसामर्थ्यात् एव अस्माकं रघुवंशजानां पौरुषं फलति इत्यर्थः ।

**समासः वृत्तिश्च**

- प्रशमितारिभिः
    - प्रशमिताः – प्रकर्षेण शमिताः
    - प्रशमितारिभिः – प्रशमिताः अरयः यैः ते प्रशमितारयः, तैः – बहुव्रीहिः ।
- मन्त्रकृतः – मन्त्रान् कृतवान् इति मन्त्रकृत्, तस्य – तद्धितान्तः क्विप्प्रत्ययः ।
- दृष्टलक्ष्यभिदः
    - दृष्टलक्ष्यम् – दृष्टं च तत् लक्ष्यम् – कर्मधारयः ।
    - दृष्टलक्ष्यभिदः – दृष्टलक्ष्यम् भिन्दन्ति इति – उपपदसमासः

**क्रियापदम्**

प्रत्यादिश्यन्ते – प्रति+आङ्+दिश् - कर्मणि लट्

=====================================

62. कुलगुरुः दैवीनां मानुषीणाम् आपदां प्रतिहर्ता इति स्वस्य पूर्वोक्तिं (श्लोकत्रयेण) विशदीकरोति दिलीपः ।

**हविरावर्जितं होतस्त्वया विधिवदग्निषु ।**
**वृष्टिर्भवति सस्यानामवग्रहविशोषिणाम् ॥ ६२ ॥**

**पदच्छेदः**

हविः,आवर्जितम्, होतः, त्वया, विधिवत्, अग्निषु, वृष्टिः, भवति, सस्यानाम्, अवग्रहविशोषिणाम् ।

**आकाङ्क्षाक्रमः**

- भवति
- किं भवति ? हविः
    - कीदृशं हविः ? आवर्जितम्

- कुत्र (आवर्जितम् ) ? अग्निषु
    - कथम् (आवर्जितम् ) ? विधिवत्
    - केन (आवर्जितम् ) ? त्वया (वसिष्ठेन)
- कथम्भूतं ? वृष्टिः (वृष्टि-रूपम्)
    - केषां कृते ? सस्यानाम् (कृते)
    - कीदृशानां सस्यानाम् ? अवग्रहविशोषिणाम्

**अन्वयः**

हे होत: ! त्वया विधिवत् अग्निषु आवर्जितं हवि: अवग्रहविशोषिणां सस्यानां (कृते) वृष्टिः भवति।

**अन्वयार्थः**

- हे होत: ! = अग्निहोत्रिन् !
- त्वया = वसिष्ठेन
- विधिवत् = यथाशास्त्रम् = शास्त्रम् अनतिक्रम्य
- अग्निषु = वह्निषु
- आवर्जितम् = तर्पितम् /समर्पितम्
- हवि: = हवनीयं द्रव्यम्
- (अवग्रह: = वर्षप्रतिबन्ध: / वृष्टेः अभाव:)
- अवग्रह-विशोषिणाम् = दैव्यापदः हेतोः वृष्टिः प्रतिबद्धा भवति । तस्मात् विशुष्यताम् (सस्यानाम्)
- सस्यानाम् = पादपानाम् (कृते )
- वृष्टि:= वर्षणम्
- भवति = जायते

**भावार्थः**

हे हवनकर्तः! यत् हवनीयं द्रव्यं त्वया (वसिष्ठेन) यथाशास्त्रम् वह्निषु

तर्पितं तदेव वृष्टेः अभावात् विशुष्यताम् पादपानाम् कृते वृष्टिरूपं जायते।
अथर्वनिधिना वसिष्ठेन मन्त्रैः अर्पितं हविः वृष्टिरूपेण सस्यानि उपजीवयति इति। अत एव "त्वम् आपदां प्रतिहर्ता असि।" इति दिलीपः वसिष्ठं उवाच।

**विशेषविषयाः**

मनुः-
"अग्नौ दत्ताहुतिः सम्यगादित्यमुपतिष्ठते।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः।" इति
अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसम्भवः । यज्ञाद्भवति पर्जन्यो यज्ञः कर्मसमुद्भवः ॥ श्रीमद्भगवद्गीता ३/१४

**समासः वृत्तिश्च**

- अवग्रहविशोषिणाम् = अवग्रहेण विशोषिणः, तेषाम्

63. दिलीपः गुरोः वसिष्ठस्य व्रताध्ययनस्य प्रभावं वर्णयति ।

**पुरुषायुषजीविन्यो निरातङ्का निरीतयः ।**
**यन्मदीयाः प्रजास्तस्य हेतुस्त्वद्ब्रह्मवर्चसम् ॥ ६३ ॥**

**पदच्छेदः**

पुरुषायुषजीविन्यः, निरातङ्काः, निरीतयः, यत्, मदीयाः, प्रजाः, तस्य, हेतुः, त्वद्-ब्रह्मवर्चसम् ।

**आकाङ्क्षाक्रमः**

- (अस्ति)

- कः अस्ति ? हेतुः
    - कथम्भूतः हेतुः ? त्वद्ब्रह्मवर्चसम्
- (सन्ति)
    - काः सन्ति ? प्रजाः
        - कीदृश्यः प्रजाः ? मदीयाः
        - पुनः कीदृश्यः प्रजाः ? निरीतयः
    - पुनः कीदृश्यः प्रजाः ? निरातङ्काः
    - पुनः कीदृश्यः प्रजाः? पुरुषायुषजीविन्यः

**अन्वयः**

मदीयाः प्रजाः यत् पुरुषायुषजीविन्यः निरातङ्काः निरीतयः (सन्ति), तस्य हेतुः त्वद्-ब्रह्मवर्चसम् ।

**अन्वयार्थः**

मदीयाः प्रजाः = मम प्रजाजनाः

यत् पुरुषायुषजीविन्यः = यत् वर्षशतं जीवन्ति

निरातङ्काः = यत् निर्भयाः सन्ति

निरीतयः (सन्ति) = यत् अतिवृष्ट्यादि-प्रकृति-प्रकोपेभ्यः मुक्ताः सन्ति

तस्य हेतुः = तस्य कारणम्

त्वद्-ब्रह्मवर्चसम् = तव व्रताध्ययनसम्पद् एव ।

**भावार्थः**

हे गुरो ! मदीयाः प्रजाजनाः यदि शतवर्ष-जीविन्यः भयरहिताः अतिवृष्ट्यादिप्रकृति-प्रकोपेभ्यः रक्षिताः च सन्ति तर्हि तत्र हेतुः भवतः व्रताध्ययनसम्पद् एव । नान्यत् किञ्चित् कारणम् अत्र । भवतः ब्रह्मतेजसा अस्मत्क्षात्रतेजः रक्ष्यते इत्यर्थः ।

**समासः/ वृत्तिः च**

मदीयाः – मम एताः

प्रजाः – प्रकर्षेण जायन्ते इति प्रजाः ।

पुरुषायुषजीविन्यः –पुरुषस्य आयुः – पुरुषायुषम् ।

पुरुषायुषं जीवितुं शीलं यासां ताः ।

निरातङ्काः – निर्गतः आतङ्कः याभ्यः ताः ।

निरीतयः – निर्गताः ईतिभ्यः इति ।

त्वद्ब्रह्मवर्चसम् – ब्रह्मणः वर्चः इति ब्रह्मवर्चसम् ।

तव ब्रह्मवर्चसम्

**विशेषः**

“अतिवृष्टिरनावृष्टिर्मूषिकाः शलभाः शुकाः ।
अत्यासन्नाश्च राजानः षडेते **ईतयः** स्मृताः” ॥ इति कामन्दकः

64. **त्वयैवं चिन्त्यमानस्य गुरुणा ब्रह्मयोनिना ।**

**सानुबन्धाः कथं न स्युः सम्पदो मे निरापदः ॥ ६४ ॥**

**पदच्छेदः**

त्वया, एवम्, चिन्त्यमानस्य, गुरुणा, ब्रह्मयोनिना, सानुबन्धाः, कथम्, न, स्युः, सम्पदः, मे, निरापदः ।

**आकाङ्क्षाक्रमः**

कथं न स्युः? स्युः एव

काः ? सम्पदः

कीदृश्यः सम्पदः ? सानुबन्धाः

कस्य सम्पदः ? मे

कीदृशस्य मे ? निरापदः

पुनः कीदृशस्य मे ? चिन्त्यमानस्य

केन चिन्त्यमानस्य ? त्वया

कीदृशेन त्वया ? गुरुणा

पुनः कीदृशेन त्वया ? ब्रह्मयोनिना

कथं चिन्त्यमानस्य ? एवम्

**अन्वयः**

ब्रह्मयोनिना गुरुणा त्वया एवं चिन्त्यमानस्य (अतः) निरापदः मे सम्पदः सानुबन्धाः कथं न स्युः ।

**अन्वयार्थः**

ब्रह्मयोनिना = ब्रह्मपुत्रेण

गुरुणा त्वया = कुलाचार्येण भवता

एवं चिन्त्यमानस्य = इत्थम् अनुध्यायमानस्य

(अतः एव) निरापदः मे = व्यसनमुक्तस्य मम

सम्पदः = सम्पत्तयः

सानुबन्धाः = अविच्छिन्नाः

कथं न स्युः = कथं न भवेयुः ? भवेयुः एव ।

**भावार्थः**

गुरो ! सृष्टिकर्तुः ब्रह्मणः पुत्रः अस्मत्कुलगुरुः त्वं अस्माकं शत्रूनां दमयिता आपदां निवारयिता प्रजानां च रक्षकः असि । अतः एव अहं आपद्भ्यः मुक्तः अस्मि मम प्रजाः च सर्वविधभयेभ्यः मुक्ताः सन्ति । व्रताध्ययनरूपं त्वदीयं धनम् एव अस्मत्कुलस्य बलम् । तस्मात् मम सम्पदः अविच्छिन्नाः कथं न भवेयुः ? भवेयुः एव इत्यर्थः ।

**समासः वृत्तिश्च**

ब्रह्मयोनिना – ब्रह्मा योनिः यस्य सः – ब्रह्मयोनिः, तेन

निरापदः – निष्क्रान्तः आपद्भ्यः इति निरापत्, तस्य

सानुबन्धाः – अनुबन्धैः सह वर्तमानाः

65. दिलीपः स्वस्य दुःखस्य कारणमाह - **किन्तु वध्वां तवैतस्यामदृष्टसदृशप्रजम् ।**
**न मामवति सद्वीपा रत्नसूरपि मेदिनी ॥ ६५॥**

**पदच्छेदः**

किन्तु, वध्वाम्, तव, एतस्याम्, अदृष्टसदृशप्रजम्, न, माम्, अवति, सद्वीपा, रत्नसूः, अपि, मेदिनी ।

**आकाङ्क्षाक्रमः**

न अवति

का न अवति ? मेदिनी

कीदृशी मेदिनी ? सद्वीपा

पुनः कीदृशी मेदिनी ? रत्नसूः

कम् न अवति ? माम्

कीदृशं माम् ? अदृष्टसदृशप्रजम्

कस्याम् ? एतस्याम्

कीदृश्याम् एतस्याम् ? वध्वाम्

कस्य वध्वाम् ? तव

**अन्वयः** –
किन्तु तव एतस्यां वध्वाम् अदृष्टसदृशप्रजं मां सद्वीपा रत्नसूः अपि मेदिनी न अवति ।

**अन्वयार्थः**
किन्तु = तथात्वे अपि (त्वत्कृपया निरापत् अस्मि तथापि)

तव = भवतः (वसिष्ठस्य)

एतस्याम् वध्वाम् = अस्यां स्नुषायाम् (सुदक्षिणायाम्)

अदृष्टसदृशप्रजम् मां = अनुरूपां सन्ततिं यः न दृष्टवान् अस्ति तादृशं माम्

सद्वीपा = भूखण्डविशेषैः सह वर्तमाना

रत्नसूः अपि = रत्नानाम् उत्पादयित्री अपि (रत्नगर्भा इति अमरकोषे)

मेदिनी = भूमिः

न अवति = न प्रीणाति ।

**भावार्थः**

गुरो! भवत्कृपया विपत्तयः मां न बाधन्ते, अविच्छिन्नाः सम्पदः मे सन्ति तथापि सन्तानश्रियाः अभावेन राज्यश्रीः रत्नादिसम्पत्तयः च मां नैव तोषयन्ति । सर्वरत्नेभ्यः पुत्ररत्नमेव श्लाघ्यम् इति सूचितम् ।

**समासः वृत्तिश्च**

अदृष्टसदृशप्रजम् मां = न दृष्टा – अदृष्टा

अदृष्टा सदृशी प्रजा येन सः – अदृष्टसदृशप्रजः, तम्

सद्वीपा = द्वीपैः सह वर्तमाना

रत्नसूः अपि = रत्नानि सूयते इति

66. पितॄणाम् अतृप्तिम् आशङ्कमानः दिलीपः आह - **नूनं मत्तः परं वंश्याः पिण्डविच्छेददर्शिनः ।**

**न प्रकामभुजः श्राद्धे स्वधासङ्ग्रहतत्पराः ॥ ६६ ॥**

**पदच्छेदः**

नूनम्, मत्तः, परम्, वंश्याः, पिण्डविच्छेददर्शिनः, न, प्रकामभुजः, श्राद्धे, स्वधासङ्ग्रहतत्पराः ।

**आकाङ्क्षाक्रमः**

(न भवन्ति)

के (न भवन्ति) ? प्रकामभुजः (न भवन्ति)

कीदृशाः ? मत्तः परं वंश्याः

पुनः कीदृशाः ? पिण्डविच्छेददर्शिनः

कुत्र ? श्राद्धे

कथम्भूताः (सन्तः) ? स्वधासङ्ग्रहतत्पराः (सन्तः)

**अन्वयः**

मत्तः परं पिण्डविच्छेददर्शिनः वंश्याः स्वधासङ्ग्रहतत्पराः (सन्तः) श्राद्धे प्रकामभुजः नूनं न भवन्ति ।

**अन्वयार्थः**

मत्तः परम् = मम अनन्तरम्

पिण्डविच्छेददर्शिनः = पिण्डदान-विच्छेदस्य दर्शनाकाङ्क्षिणः

वंश्याः = वंशोद्भवाः

स्वधासङ्ग्रहतत्पराः (सन्तः) = पितृभोज्यस्य सङ्ग्रहे लग्नाः

श्राद्धे = पितृकार्ये

प्रकामभुजः = पर्याप्तभोजिनः

नूनं (न भवन्ति) । = निश्चयेन न भवन्ति ।

**भावार्थः**

मम अनन्तरं पुत्राभावात् अस्मत्पूर्वजाः श्राद्धे पिण्डदानविच्छेदम् उत्प्रेक्षमाणाः पर्याप्तभोजिनः न भवेयुः । यथा निर्धनाः आपद्धनं

सङ्गृह्णन्ति तथैव एते अस्मद्वंश्याः पितृभोज्यस्य सङ्ग्रहे लग्नाः सन्तः यथेच्छं न भुञ्ज्युः ।

**समासः वृत्तिश्च**

पिण्डविच्छेददर्शिनः = पिण्डस्य विच्छेदः – पिण्डविच्छेदः

पिण्डविच्छेदं द्रष्टुं शीलम् एषां ते

वंश्याः = वंशे भवाः

स्वधासङ्ग्रहतत्पराः = स्वधायाः सङ्ग्रहः – स्वधासङ्ग्रहः

स्वधासङ्ग्रहे तत्पराः

प्रकामभुजः = प्रकामं भुञ्जन्ति इति

67. पितॄणाम् अतृप्तिम् आशङ्कमानः दिलीपः आह -

**मत्परं दुर्लभं मत्वा नूनमावर्जितं मया ।**
**पयः पूर्वैः स्वनिःश्वासैः कवोष्णमुपभुज्यते ॥ ६७ ॥**

**पदच्छेदः**

मत्परम्, दुर्लभम्, मत्वा, नूनम्, आवर्जितम्, मया, पयः, पूर्वैः, स्वनिःश्वासैः, कवोष्णम्, उपभुज्यते ।

**आकाङ्क्षाक्रमः**

- नूनम् उपभुज्यते
- किम् उपभुज्यते ? पयः
    - कीदृशं पयः? आवर्जितम्

- केन आवर्जितम् ? मया
    - कीदृशं पयः? कवोष्णम्
        - कैः (करणैः) ? स्वनिःश्वासैः
    - कैः उपभुज्यते ? पूर्वैः
    - किं कृत्वा ? मत्वा
        - किम् इति मत्वा ? दुर्लभम् इति
            - कदा दुर्लभम् भवति इति ? मत्परम्

**अन्वयः**

मत्परं दुर्लभं मत्वा मया आवर्जितं पयः पूर्वैः स्वनिःश्वासैः कवोष्णम् उपभुज्यते नूनम् ।

**पदार्थः**

- मत्परम् = मदनन्तरम्
- दुर्लभम् = दुष्प्रापम्
- मत्वा = ज्ञात्वा
- मया = दिलीपेन
- आवर्जितम् = दत्तम्
- पयः = जलम्
- पूर्वैः = पूर्वजैः
- स्वनिःश्वासैः = दुःखजैः आत्मनः मुखमारुतैः
- कवोष्णम् = ईषद् उष्णं यथा स्यात् तथा
- नूनम् = निश्चयेन
- उपभुज्यते = पीयते

**भावार्थः**

मम अनन्तरं पुत्राभावात् पितरः नूनं दुःखतप्ताः भवेयुः । तस्मात् मया विसृज्यमानस्य तोयस्य पानसमये तेषां निःश्वसितैः तत्तोयम् ईषदुष्णं सञ्जायेत इत्यहम् आशङ्के ।

**समासः वृत्तिश्च**

- मत्परम् = मत्तः परम् – पञ्चमीतत्पुरुषः
- स्वनिःश्वासैः = स्वस्य निःश्वासाः, तैः – षष्ठीतत्पुरुषः

68. "पितृणात् अमुक्तोऽहम्" इत्याह दिलीपः –

**सोऽहमिज्याविशुद्धात्मा प्रजालोपनिमीलितः ।**
**प्रकाशश्चाप्रकाशश्च लोकालोक इवाचलः ॥ ६८ ॥**

**पदच्छेदः**

सः, अहम्, इज्या-विशुद्धात्मा, प्रजा-लोप-निमीलितः, प्रकाशः, च, अप्रकाशः, च, लोकालोकः, इव, अचलः।

**आकाङ्क्षाक्रमः**

- प्रकाशः च अप्रकाशः च (अस्मि)
  - कः ? अहम्
    - कीदृशः अहम् ? सः
    - पुनः कीदृशः ? इज्याविशुद्धात्मा
    - पुनः कीदृशः ? प्रजालोपनिमीलितः
  - कः इव ? लोकालोकः अचलः इव

**अन्वयः**

सः अहम् इज्याविशुद्धात्मा प्रजालोपनिमीलितः, लोकालोकः अचलः इव, प्रकाशः च अप्रकाशः च (अस्मि) ।

**पदार्थः**

- सः अहम् = मदनन्तरं सन्ततेः अभावात् यस्य पूर्वजाः अतृप्ताः भवेयुः तादृशः अहम्
- इज्याविशुद्धात्मा = यज्ञादिकर्मणा देवर्णात् मुक्तः अतः पूतचित्तः
- प्रजालोपनिमीलितः = सन्तानस्य अभावात् पितृणात् अमुक्तः (अतः)
- लोकालोकः अचलः इव = लोकालोकः इति कश्चन पर्वतः अस्ति । तस्य अन्तः सुर्यसम्पर्कात् प्रकाशितः भवति । बहिः तु तमोव्याप्त्या अन्धकारः भवति ।

**भावार्थः**

यथा लोकालोकः पर्वतः अन्तः सूर्यसम्पर्कात् बहिः तमोव्याप्त्या च प्रकाशः च अप्रकाशः च भवति तथा यज्ञादिकर्मणा देवर्णविमुक्तोऽहं प्रसन्नचेताः अस्मि किन्तु पुत्राभावेन पितृणस्य अविमोचनात् कुण्ठितचेताः सञ्जातः अस्मि ।

**समासः वृत्तिश्च**

- इज्याविशुद्धात्मा
    - विशुद्धः आत्मा = विशुद्धात्मा
    - इज्यया विशुद्धात्मा = इज्याविशुद्धात्मा
- प्रजालोपनिमीलितः
    - प्रजालोपः = प्रजायाः लोपः
    - प्रजालोपनिमीलितः = प्रजालोपेन निमीलितः
- लोकश्चासावलोक्श्च इति लोकालोकः
    - लोक्यते इति लोकः

- न लोक्यते इति अलोकः
- प्रकाशते इति प्रकाशः
    - न प्रकाशते इति अप्रकाशः

Note:

According to the Puranic geography, the Lokaaloka mountain range, is a belt or chain of mountains surrounding the outermost of the seven seas, and dividing the visible world from the region of darkness. Since the sun and the whole firmament of stars roll within its circle, these mountains are lit up on one side and shrouded in perpetual darkness on the other.

69. सत्पुत्रः परत्र इह च सुखाय भवति ।

**लोकान्तरसुखं पुण्यं तपोदानसमुद्भवम् ।**
**सन्ततिः शुद्धवंश्या हि परत्रेह च शर्मणे ॥ ६९ ॥**

**पदच्छेदः**

लोकान्तरसुखम्, पुण्यम्, तपोदानसमुद्भवम्,सन्ततिः, शुद्धवंश्या, हि,परत्र, इह, च, शर्मणे ।

**आकाङ्क्षाक्रमः**

- पुण्यं (भवति)
    - कीदृशं पुण्यम् ? तपोदानसमुद्भवम्
    - तपोदानसमुद्भवं पुण्यं कीदृशं भवति ? लोकान्तरसुखम्
- शर्मणे (भवति)
    - का? सन्ततिः

- कीदृशी सन्ततिः ? शुद्धवंश्या
    - कुत्र? इह
        - पुनः कुत्र ? परत्र च

**अन्वयः**

तपोदानसमुद्भवं पुण्यं लोकान्तर-सुखं (भवति) । शुद्धवंश्या सन्ततिः हि परत्र इह च शर्मणे (भवति) ।

**अन्वयार्थः**

- तपोदानसमुद्भवम् = व्रतादेः च दानात् च समुत्पन्नम्
- पुण्यम् = सुकृतम्
- लोकान्तरसुखं(भवति) – परलोकसुखाय कल्पते ।
- हि = निश्चयेन
- शुद्धवंश्या सन्ततिः = शुद्धवंशे जातम् अपत्यम्
- इह = अस्मिन् लोके
- परत्र च = परलोके च
- शर्मणे भवति = सुखाय भवति ।

**भावार्थः**

उपवास-मौनव्रतादीनां तपश्चर्याणाम् अनुष्ठानेन च अन्न-वस्त्र-विद्यादिदानेन च यत् पुण्यम् आर्जितं भवति तत् परलोकसुखाय कल्पते । किन्तु शुद्धवंशोत्पन्ना सन्ततिः जीवनकाले सन्तुष्टिं ददाति सद्गत्यै चापि कल्पते ।

**समासः वृत्तिश्च**

- तपोदानसमुद्भवम्
    - तपः च दानं च = तपोदाने
    - तपोदाने समुद्भवः (कारणं) यस्य तत् = तपोदानसमुद्भवम्

- लोकान्तरसुखम्
    - अन्यः लोकः इति = लोकान्तरम्
    - लोकान्तरे सुखम् = लोकान्तरसुखम्
- शुद्धवंश्या
    - शुद्धवंशः = शुद्धः वंशः
    - शुद्धवंश्या = शुद्धवंशे भवा

**विशेषविषयः**

- पुंनाम्नो नरकात् त्रायते इति पुत्रः ।

70. समर्थोऽपि कथमनपत्यं मां ज्ञात्वा भवान्न दयते इत्याह-

**तया हीनं विधातर्मां कथं पश्यन्न दूयसे ।**
**सिक्तं स्वयमिव स्नेहाद्वन्ध्यमाश्रमवृक्षकम् ॥ ७० ॥**

**पदच्छेदः**

तयाहीनम्, विधातः, माम्, कथम्, पश्यन्, न, दूयसे, सिक्तम्, स्वयम्, इव, स्नेहात्, वन्ध्यम्, आश्रमवृक्षकम् ।

**आकाङ्क्षाक्रमः**

- हे विधातः !
- कथं न दूयसे ?
    - क: न दूयसे ? त्वम् (वसिष्ठः)
    - किं कुर्वन् ? पश्यन्
    - कं पश्यन् ? माम् (दिलीपम्)

- कीदृशं माम् ? हीनम्
    - कया हीनम् ? तया (सन्तत्या)
- कथम् इव ? आश्रमवृक्षकम् इव
    - कीदृशम् ? वन्ध्यम्
    - पुन: कीदृशम् ? सिक्तम्
        - केन सिक्तम् ? स्वयम् (एव)(वसिष्ठेन )
        - कस्मात् (भावात्) सिक्तम् ? स्नेहात्

**अन्वयः**

हे विधातः ! स्नेहात् स्वयम् (एव) सिक्तं वन्ध्यम् आश्रमवृक्षकम् इव तया हीनं मां पश्यन् (त्वं) कथं न दूयसे ।

**अन्वयार्थः**

- हे विधातः = स्रष्टः
- तया = सन्तत्या
- हीनं = रहितम्
- मां = दिलीपम्
- स्नेहात् = प्रेम्णा
- स्वयम् = आत्मना
- (एव = निश्चयेन)
- सिक्तं = जलसेकेन वर्धितम्
- वन्ध्यम् = निष्फलम्
- आश्रमवृक्षकम् = आश्रमस्य तरुपोतम्, ह्रस्वः वृक्षः, वृक्षकः
- इव = यथा
- पश्यन् = अवलोकयन्
- कथं = केन प्रकारेण

- न दूयसे = न हि परितप्यसे

**भावार्थः**

अत्र समर्थोऽपि कथं सन्तत्या रहितं मां ज्ञात्वा भवान् उपेक्षते इति दिलीपः आह ।

हे विधातः ! आत्मना एव जलसेकेन प्रेम्णा वर्धितः आश्रमस्य बालवृक्षः यदि निष्फलः स्यात् तर्हि तद्यथा पीडाजनकं भवति तथैव स्वकृपया संवर्धितमपि मां पुत्रहीनं दृष्ट्वा भवान् कथं न व्यथते ।

**विशेषविषयाः**

विधातः इत्यनेन समर्थः अपि उपेक्षसे इति गम्यते ।

वन्ध्यः अफलः अवकेशी च- अमरः

दूङ्-परितापे, दूयते, दूयसे(म.पु )

**समासः वृत्तिश्च**

आश्रमवृक्षकम्-

ह्रस्वः वृक्षः वृक्षकः, आश्रमस्य वृक्षकः इति आश्रमवृक्षकः,

तम् , आश्रमवृक्षकम् ।

=====================================
=

71. दिलीपस्य स्वकीयापुत्रत्वस्य असह्यपीडत्वकथनमित्याह-

**असह्यपीडं भगवन्नृणमन्त्यमवेहि मे ।**
**अरुन्तुदमिवालानमनिर्वाणस्य दन्तिनः ॥ ७१ ॥**

**पदच्छेदः**

असह्यपीडम्, भगवन्, ऋणम्, अन्त्यम्, अवेहि, मे, अरुन्तुदम्, इव, आलानम्, अनिर्वाणस्य, दन्तिनः ।

**आकाङ्क्षाक्रमः**

- हे भगवन् !
- अवेहि ।
  - कः ? (त्वम्)
  - किम् अवेहि ? असह्यपीडम्
    - किम् असह्यपीडम् ? ऋणम्
      - कीदृशम् ऋणम् ? अन्त्यम्
      - कस्य ऋणम् ? मे (दिलीपस्य)
    - कथमिव असह्यपीडम् ? आलानम् इव
      - कीदृशम् आलानम् ? अरुन्तुदम्
        - कस्य अरुन्तुदम् ? दन्तिनः
          - कीदृशस्य दन्तिनः ? अनिर्वाणस्य

**अन्वयः**

हे भगवन् ! मे अन्त्यम् ऋणम् अनिर्वाणस्य दन्तिनः अरुन्तुदम् आलानम् इव असह्यपीडम् अवेहि ।

**अन्वयार्थः**

- हे भगवन् !
- मे = मम (पुत्ररहितस्य मम)

- अन्त्यम् ऋणम् = अवसाने भवम् ऋणम्,
    - ऋषिदेवऋणाभ्याम् अनन्तरं भवति इत्यतः पैतृकमृणम् अन्त्यम् ऋणम्
- अनिर्वाणस्य = मज्जनरहितस्य
    - पर्यायपदानि – निर्वाणं निर्वृतौ मोक्षे विनाशे गजमज्जने – यादवः
- दन्तिनः = गजस्य
- अरुन्तुदम्
    - अरुः = मर्मस्थानम्
    - तुदति = स्पृशति
    - अरुन्तुदम् = मर्मस्पृक्
- आलानम् = गजबन्धस्तम्भम्
    - पर्यायपदानि – आलानं बन्धनस्तम्भः – अमरः
- इव = यथा
- असह्यपीडम्
    - असह्या = सोढुमशक्या
    - पीडा = व्यथा
    - असह्यपीडम् = दुःसहदुःखं यस्मिन् तत्
- अवेहि = विद्धि
    - अव + इण् "इण गतौ", प.प., प्रेरणा (लोट्), म.पु, ए.व., लट्लकारे एति

**भावार्थः**

हे भगवन् ! यथा गजबन्धस्तम्भं मज्जनरहितस्य गजस्य मर्मस्थानं पीडयति तथैव पुत्ररहितस्य मम पैतृकम् ऋणं सोढुमशक्यां व्यथां जनयति इति त्वम् जानीहि ।

**विशेषविषयाः**

- ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः।

वैराग्यस्याथ मोक्षस्य षण्णां भग इतीरणा – विष्णु पु. 6।5।74

- निर्वाणोत्थानशयनानि त्रीणि गजकर्माणि – पालकाप्यम्
- ऋणं देवस्य यागेन ऋषीणां दानकर्मणा ।
  संतत्या पितृलोकानां शोधयित्वा परिव्रजेत् ।।

**समासः वृत्तिश्च**

- भगवान् = भगः विद्यते अस्य इति – वतुप्प्रत्ययः
- अन्त्यम् = अन्ते भवम्
- अनिर्वाणस्य = न विद्यते निर्वाणं यस्य सः अनिर्वाणः, तस्य – बहुव्रीहिः
- अरुन्तुदम् = अरुः तुदति इति, अरुस् + तुद, स् à न्
- असह्यपीडम्
  - सह्या = सोढुं योग्या
  - असह्या = न सह्या, नञ्तत्पुरुषः
  - असह्यपीडम् = असह्या पीडा यस्मिन् तत्

72. असह्यपीडातः तं मोचयितुं वसिष्ठः एव समर्थः इति दिलीपः वदति

**तस्मान्मुच्ये यथा तात संविधातुं तथार्हसि।**

**इक्ष्वाकूणां दुरापेऽर्थे त्वदधीना हि सिद्धयः ॥ ७२ ॥**

**पदच्छेदः**

तस्मात्, मुच्ये, यथा, तात, संविधातुम्, तथा, अर्हसि, इक्ष्वाकूणाम्, दुरापे, अर्थे, त्वदधीनाः, हि, सिद्धयः।

**आकाङ्क्षाक्रमः**

- अर्हसि

- कः ? त्वम्
- किं कर्तुम् ? संविधातुम्
  - कथं संविधातुम् ? यथा मुच्ये तथा
  - कस्मात् संविधातुम् ? तस्मात्
- त्वदधीनाः हि भवन्ति
  - काः ? सिद्धयः
  - कस्मिन् विषये ? अर्थे
    - कीदृशे अर्थे ? दुरापे
    - केषां अर्थे ? इक्ष्वाकूणाम्

**अन्वयः**

हे तात । तस्मात् यथा (अहं) मुच्ये तथा संविधातुं (त्वम्) अर्हसि । हि इक्ष्वाकूणां दुरापे अर्थे सिद्धयः त्वदधीनाः (भवन्ति) ।

**अन्वयार्थः**

- तात = पितः
- तस्मात् = पैतृकादृणात्
- मुच्ये = अहं मुक्तः भवामि
  - मुच् "मुच्लँ मोक्षणे" कर्मणि लट्लकारः आत्मनेपदी, उ.पु., ए.व.
- संविधातुम् = कर्तुम्
- हि = यस्मात् कारणात्
- दुरापे = दुःखेनाप्यते इति (दुष्प्रापे)
- अर्थे = प्रयोजने
- त्वदधीनाः = तव आयत्ताः
- सिद्धयः = कार्यसाफल्यानि

**भावार्थः**

तस्मात् यथा अहं पैतृकाद् ऋणात् मुक्तः भवामि तथा उपायं कुरु, यतः इक्ष्वाकुवंशीयानां राज्ञां दुष्कराणाम् अपि कार्याणां सिद्धयः तव आयत्ताः सन्ति ।

**समासः वृत्तिश्च**

- संविधातुम् = सम् + वि + धा "डुधाञ् धारण-पोषणयो:" + तुमुन्प्रत्ययः
- दुरापे = दुःखेन आप्यते यः सः, तस्मिन्
    - दुर् + आप् "आप्लृँ व्याप्तौ" + खल्प्रत्ययः, त्रि.लि., अत्र पु.लि., स.वि., ए.व.
- त्वदधीनाः = तव अधीनाः = त्वत् + अधीनाः

73. दिलीपप्रश्नं श्रुत्वा वसिष्ठस्य तदुपरि विचारः -

**इति विज्ञापितो राज्ञा ध्यानस्तिमितलोचनः।**
**क्षणमात्रमृषिस्तस्थौ सुप्तमीन इव ह्रदः ॥ ७३ ॥**

**पदच्छेदः**

इति विज्ञापितः राज्ञा ध्यान-स्तिमित-लोचनः क्षण-मात्रम् ऋषिः तस्थौ सुप्त-मीनः इव ह्रदः

**आकाङ्क्षाक्रमः**

- तस्थौ
    - कः तस्थौ ? ऋषिः
        - कीदृशः ऋषिः ? विज्ञापितः
            - केन विज्ञापितः ? राज्ञा
            - किमिति विज्ञापितः ? (यद् पूर्वस्मिन् श्लोके उक्तं तत्) ... इति
        - कथम्भूतः तस्थौ ? ध्यानस्तिमितलोचनः (सन्)

- किमिव तस्थौ ? ह्रदः इव
        - कीदृशः ह्रदः ? सुप्तमीनः
    - कियन्तं कालं यावत् तस्थौ ? क्षणमात्रम्

**अन्वयः**

इति राज्ञा विज्ञापितः मुनिः सुप्तमीनः ह्रदः इव क्षणमात्रं ध्यनस्तिमितलोचनः (सन्) तस्थौ ।

**अन्वयार्थः**

- इति – एवम्
- राज्ञा – महाराजेन दिलीपेन
    - (चक्रवर्ती, सार्वभौमः – अमरः)
- विज्ञापितः – निवेदितः
- मुनिः – वसिष्ठमहर्षिः
- सुप्तमीनः – निद्रिताः मत्स्याः यस्मिन् तादृशः ह्रदः
    - (मीनः – पृथुरोमा, झषः, मत्स्यः, वैसारिणः, अण्डजः, विसारः, शकुली – अमरः)
- ह्रदः – सरः
    - (जलाशयः, जलाधारः, तत्र अगाधजले ह्रदः – अमरः)
- इव – यथा
- क्षणमात्रम् – क्षणमेव
- ध्यानस्तिमितलोचनः – यस्य नयने ध्यानेन निश्चले स्तः
    - स्तिमितम् = निष्कम्पम्
    - (लोचनम्, नयनम्, नेत्रम्, ईक्षणम्, चक्षुः, अक्षिणी, दृक्-दृष्टी – अमरः)
- तस्थौ – स्थितवान्

- (स्था “ष्ठा गतिनिवृत्तौ” धातुः लिट्., प्र.पु., ए.व.)

**भावार्थः**

दिलीपस्य मनोव्यथां श्रुत्वा मुनिवर्यः तस्य पुत्रप्रतिबन्धकारणं ज्ञातुं किञ्चित् कालं ध्यानस्थः अभवत् । विशालसरोवरे जलचराः निद्रिताः (गतिविहीनाः) चेत् सरः निश्चलः च भवति । तथा एव क्षणकालं यावत् समाधिस्थः वसिष्ठमुनिः निश्चलनयनः सञ्जातः ।

**समासः**

- सुप्तमीनः = सुप्ताः मीनाः यस्मिन् सः – बहुव्रीहिः
- ध्यानस्तिमितलोचनः
    - ध्यानस्तिमिते = ध्यानेन स्तिमिते – तृतीयातत्पुरुषः
    - ध्यनस्तिमितलोचनः = ध्यानस्तिमिते लोचने यस्य सः – बहुव्रीहिः

**अलङ्कारः**

- उपमा
    - ह्रदे मीनानां शयनेन निश्चलम् इव मुनौ वृत्तीनां निरोधेन समाधिस्थितिः

74. ध्यानेन पुत्रप्रतिबन्धकारणं विज्ञाय वसिष्ठः दिलीपं वदति

**सोऽपश्यत्प्रणिधानेन संततेः स्तंभकारणम्**
**भावितात्मा भुवो भर्तुरथैनं प्रत्यबोधयत् ॥ ७४ ॥**

**पदच्छेदः**

सः, अपश्यत्, प्रणिधानेन, सन्ततेः, स्तम्भकारणम्, भावितात्मा, भुवः, भर्तुः, अथ, एनम्, प्रत्यबोधयत्

**आकाङ्क्षाक्रमः**

- अपश्यत् ।
  - कः अपश्यत् ? सः
    - कः सः ? ऋषिः
      - कीदृशः ऋषिः ? भावितात्मा
    - किम् अपश्यत् ? स्तम्भकारणम्
      - कस्याः स्तम्भकारणम् ? सन्ततेः
        - कस्य सन्ततेः ? भर्तुः
          - कस्य भर्तुः ? भुवः ('भूः' शब्दः)
        - कथम् अपश्यत् ? प्रणिधानेन
      - प्रत्यबोधयत् (प्रति + अबोधयत्)
        - कः प्रत्यबोधयत् ? (सः ऋषिः)
        - कं प्रत्यबोधयत् ? एनम्
        - कदा प्रत्यबोधयत् ? अथ

**अन्वयः**

सः भावितात्मा भुवोः भर्तुः संततेः स्तंभकारणं प्रणिधानेन अपश्यत् । अथ एनं प्रत्यबोधयत् ।

**अन्वयार्थः**

- सः – वसिष्ठः
- प्रणिधानेन – चित्तैकाग्र्येण
- भावितात्मा – शुद्धान्तःकरणः
- भुवः भर्तुः – पृथिवीनाथस्य
  - (भूः, भूमिः, अचला, अनन्ता, रसा, विश्वम्भरा, स्थिरा, धरा, धरित्री, धरणिः, क्षोणी, ज्या, काश्यपी, क्षितिः, सर्वसहा, वसुमती, वसुधा, उर्वी, वसुन्धरा, गोत्रा, कुः, पृथिवी, पृथ्वी, इक्ष्मा, अवनिः,

मेदिनी, मही, विपुला, गह्वरी, धात्री, गौरिला, कुम्भिनी, क्षमा, जगती, रत्नगर्भा, भूतधात्री, अब्धि, मेखला – अमरः)
    - (धवः, प्रियः, पतिः, भर्ता – अमरः)
- संततेः – वंशाभिवृद्धेः
    - (संततिः, गोत्रम् , कुलम् , अभिजनः, अन्वयः, वंशः, अन्ववायः, सन्तानः – अमरः)
- स्तंभकारणम् – प्रतिबन्धकारणम्
    - (स्तम्भौ स्थूणा जडीभावौ – अमरः )
- अपश्यत् – दृष्टवान्
    - (दृश् "दृशिर् प्रेक्षणे" धातुः, लङ्लकारः, प्र.पु., ए.व.)
- अथ – ततः परम्
- एनम् – इमं दिलीपम्
- प्रत्यबोधयत् – व्यज्ञापयत्
    - प्रति + बुध् "बुध् अवगमने" धातुः, णिजन्तः, लङ्लकारः, प्र.पु., ए.व.

**भावार्थः**

शुद्धान्तःकरणः वसिष्ठऋषिः ध्यानावस्थायां दिलीपस्य संतानविहीनतायाः कारणं ज्ञात्वा महाराजं प्रति एवम् अवदत् ।

75. वसिष्ठस्य राज्ञः सन्तानप्रतिबन्धकारणकथनमित्यत्राह –

**पुरा शक्रमुपस्थाय तवोर्वीं प्रति यास्यतः।**
**आसीत्कल्पतरुच्छायामाश्रिता सुरभिः पथि ॥ ७५ ॥**

**पदच्छेदः**

पुरा, शक्रम्, उपस्थाय, तव, उर्वीम्, प्रति, यास्यतः, आसीत्, कल्पतरुच्छायाम्, आश्रिता, सुरभिः, पथि

**आकाङ्क्षाक्रमः**

- आसीत् ।
    - का आसीत् ? सुरभिः
        - कीदृशी सुरभिः ? आश्रिता
            - काम् आश्रिता ? कल्पतरुच्छायाम्
        - कुत्र आश्रिता ? पथि
            - कस्य पथि ? तव (दिलीपस्य)
                - कीदृशस्य तव ? यास्यतः
                    - कां प्रति यास्यतः ? उर्वीं प्रति
                    - किं कृत्वा यास्यतः ? उपस्थाय
                        - कम् उपस्थाय ? शक्रम्
                    - कदा ? पुरा

**अन्वयः**

पुरा शक्रम् उपस्थाय उर्वीं प्रति यास्यतः तव पथि कल्पतरुच्छायाम् आश्रिता सुरभिः आसीत् ।

**अन्वयार्थः**

- पुरा = पूर्वम्
- शक्रम् = इन्द्रम्
- उपस्थाय = संसेव्य
- उर्वीम् = पृथिवीम्, भुवम्
- प्रति = उद्दिश्य
- यास्यतः = गमिष्यतः

    या "या प्रापणे" + शतृप्रत्ययः, लट्लकारे याति, लृट्लकारे यास्यति

- तव = दिलीपस्य
- पथि = मार्गे
- कल्पतरुच्छायाम् = कल्पवृक्षस्य छायाम्
- आश्रिता = उपविष्टा
- सुरभिः = कामधेनुः
- आसीत् = अभूत्

**भावार्थः**

वसिष्ठः ध्यानेन दिलीपस्य सन्तानाभावरूपस्य कारणं ज्ञात्वा दिलीपाय अवोचत् – "पूर्वं कदाचित् त्वम् इन्द्रं संसेव्य भुवमुद्दिश्य यदा आगच्छन् आसीः तदा मार्गे कल्पवृक्षस्य अधः छायायां कामधेनुः स्थिता आसीत्" इति ।

**समासः वृत्तिश्च**

- कल्पतरुच्छायाम् = कल्पतरोः छाया, ताम् – षष्ठीतत्पुरुषः ।

76. कामधेनोः प्रदक्षिणाऽकरणे हेतुं प्रदर्शयन्नाह-

**धर्मलोपभयाद्राज्ञीमृतुस्नातामिमां स्मरन् ।**
**प्रदक्षिणक्रियार्हायां तस्यां त्वं साधु नाचरः ॥ ७६ ॥**

**पाठभेदः**

धर्मलोपभयाद्राज्ञीमृतुस्नाता**मनु**स्मरन् ।
प्रदक्षिणक्रियार्हायां तस्यां त्वं साधु नाचरः॥ ७६ ॥

**पदच्छेदः**

धर्मलोपभयात्, राज्ञीम्, ऋतुस्नाताम्, इमाम्, स्मरन्, प्रदक्षिणक्रियार्हायाम्, तस्याम्, त्वम्, साधु, न, आचरः

**आकाङ्क्षाक्रमः**

- न आचरः

- कः ? त्वम् (दिलीपः)
- कथं न आचरः ? साधु (प्रदक्षिणक्रियां)
  - कस्यां साधु नाचरः ? तस्याम्
    - कीदृश्यां तस्याम् ? प्रदक्षिणक्रियार्हायाम् (धेनोः / धेन्वाम्)
  - किं कुर्वन् न आचरः ? स्मरन्
    - कां स्मरन् ? इमाम्
      - काम् इमाम् ? राज्ञीम्
        - कीदृशीं राज्ञीम् ? ऋतुस्नाताम्
      - किमर्थं स्मरन् ? धर्मलोपभयात्

**अन्वयः**

ऋतुस्नाताम् इमां राज्ञीं धर्मलोपभयात् स्मरन् प्रदक्षिणक्रियार्हायां तस्यां त्वं (प्रदक्षिणक्रियारूपं उचितं विधिं) साधु न आचरः ।

**अन्वयार्थः**

- ऋतुस्नाताम् – कृतस्नाताम्
  - (आर्तवसमयानन्तरं कृतं स्नानम् ऋतुस्नानम्)
- इमाम् – एताम्
- राज्ञीम् – महिषीं सुदक्षिणाम्
- धर्मलोपभयात् – धर्मपालनस्य भङ्गभीत्या
- स्मरन् – अनुध्यायन्
- प्रदक्षिणक्रियार्हायाम् – परिभ्रमणक्रियायोग्याम्
- तस्याम् – कामधेन्वाम्
- त्वम् – दिलीपः
- साधु – उचितम्, अत्र प्रदक्षिणाद्युचितं सत्कारम्
- न आचरः – न कृतवान्

**भावार्थः**

स्वर्गलोकात् आगमनसमये दिलीपः धर्मपालनस्य भङ्गभीत्या ऋतुस्नातायाः सुदक्षिणायाः चिन्तने आसन् । अतः तत्र स्थितां कामधेनुम् अनवधानात् न अवलोकितवान् । सा सुरभिः तु प्रदक्षिणादिसंस्कारेण सत्कारयोग्या । तस्याः धेनोः उपेक्षा असाधु इति वसिष्ठमहर्षिः दिलीपमहाराजम् उक्तवान् ।

77. अनादृतया सुरभ्या दिलीपाय शापप्रदानम् इत्याह –

**अवजानासि मां यस्मादतस्ते न भविष्यति**
**मत्प्रसूतिमनाराध्य प्रजेति त्वां शशाप सा ॥ ७७ ॥**

**पदच्छेदः**

अवजानासि, माम्, यस्मात्, अतः, ते, न, भविष्यति, मत्प्रसूतिम्, अनाराध्य, प्रजा, इति, त्वाम्, शशाप, सा

**आकाङ्क्षाक्रमः**

- शशाप
  - का शशाप ? सा (कामधेनुः)
  - कं शशाप ? त्वाम् (दिलीपम्)
  - किमिति शशाप ? न भविष्यति इति
    - का न भविष्यति ? प्रजा
      - कस्य प्रजा ? ते
    - किं अकृत्वा ? अनाराध्य
      - काम् अनाराध्य ? मत्प्रसूतिम्
    - किमर्थं शशाप ? यस्मात् अवजानासि अतः
      - काम् अवजानासि ? माम्
      - कः अवजानासि ? त्वम्

**अन्वयः**

यस्मात् माम् अवजानासि, अतः मत्प्रसूतिम् अनाराध्य ते प्रजा न भविष्यति इति सा त्वां शशाप ।

**अन्वयार्थः**

- यस्मात् – यस्मात् कारणात्
- माम् – कामधेनुम्
- अवजानासि – तिरस्करोषि
- अतः – अस्मात् कारणात्
- मत्प्रसूतिम् – मम सन्ततिम्
- अनाराध्य – असेवयित्वा, यावत् न सेवयसि तावत्
- ते – तव, दिलीपस्य
- प्रजा – सन्ततिः
- न भविष्यति – न सम्पद्यते
- इति – इत्थम्
- सा – कामधेनुः
- त्वाम् – दिलीपम्
- शशाप – शापं दत्तवती

**भावार्थः**

दिलीपः पूजार्हां कामधेनुं न पूजितवान् । अतः कामधेनुः तं "मम सन्ततेः पूजासत्कारं विना तव सन्तत्युत्पत्तिः न भवेत्" इति शापं दत्तवती ।

78. कथं सः शापः दिलीपेन न श्रुतः इत्याह -

**स शापो न त्वया राजन्न च सारथिना श्रुतः।**
**नदत्याकाशगङ्गायाः स्रोतस्युद्दामदिग्गजे ॥ ७८ ॥**

**पदच्छेदः**

सः, शापः, न, त्वया, राजन्, न, च, सारथिना, श्रुतः, नदति, आकाशगङ्गायाः, स्रोतसि, उद्दामदिग्गजे

**आकाङ्क्षाक्रमः**

- राजन्
- न श्रुतः।
    - कः न श्रुतः ? सः
        - कः सः ? शापः
    - केन न श्रुतः ? त्वया (दिलीपेन)
        - पुनः केन न श्रुतः ? सारथिना च
    - कदा न श्रुतः ? नदति (सति)
        - कस्मिन् नदति (सति) ? स्रोतसि
            - कीदृशे स्रोतसि ? उद्दामदिग्गजे
            - कस्याः स्रोतसि ? आकाशगङ्गायाः

**अन्वयः**

हे राजन् ! उद्दामदिग्गजे आकाशगङ्गायाः स्रोतसि नदति (सति) सः शापः त्वया न श्रुतः, सारथिना च न (श्रुतः) ।

**अन्वयार्थः**

- उद्दामदिग्गजे
    - दाम = शृङ्खला / रज्जुः / बन्धनम्
    - उद्दामानः = बन्धनात् उद्गताः = निर्बाधं जलप्रवाहे क्रीडन्तः गजाः
    - उद्दामदिग्गजे = यस्मिन् जलस्रोतसि उद्दामानः दिग्गजाः सन्ति तादृशे जलाशये
- आकाशगङ्गायाः = सुरनद्याः

- स्रोतसि = प्रवाहे
    - स्रोतसि – सकारान्तः स्रोतस् शब्दः, प्र.पु., नपु., स.वि., ए.व.
- नदति सति = शब्दायमाने (सति)
    - नद् "णद अव्यक्ते" (लट्लकारे नदति), शतृप्रत्ययान्तः प्र.पु., नपु., स.वि., ए.व.
- स: = कामधेन्वा प्रदत्त:
- शाप: = आक्रोश:
- त्वया = दिलीपेन
- न श्रुत: = न आकर्णित:
    - "श्रु श्रवणे" (लट्लकारे शृणोति), क्तप्रत्यय:
- न च सारथिना (श्रुत:) = न च सूतेन श्रुत:।

**भावार्थः**

"यतस्त्वं मां तिरस्करोषि अत: तव सन्तति: मत्सन्तते: आराधनं विना न संपत्स्यते" इति कामधेन्वा दत्त: अयं शाप: कथम् अस्माभि: न श्रुतमिति आह । "हे राजन् ! कामधेन्वा प्रदत्त: स शाप: त्वया वा तव सारथिना वा न श्रुत:, यत: सुरनद्याः उत्कटे प्रवाहे क्रीडार्थम् अथवा स्नानार्थम् आगतानां शृङ्खलाभ्यः उद्गतानां दिङ्नागानां महत्कलकलध्वनिः शब्दायमानः आसीत्" ।

**समासः**

- उद्दामदिग्गजे
    - उद्दामानः = दाम्नः उद्गताः
    - दिग्गजाः = दिशां गजाः
    - उद्दामदिग्गजे = उद्दामान: दिग्गजा: यस्मिन् तत्, तस्मिन्

79. पूजार्हाणाम् अपूजनं श्रेयः रुणद्धि -

**ईप्सितं तदवज्ञानाद्विद्धि सार्गलमात्मनः ।**

**प्रतिबध्नाति हि श्रेयः पूज्यपूजाव्यतिक्रमः ॥ ७९ ॥**

**पदच्छेदः**

ईप्सितम्, तदवज्ञानात्, विद्धि, सार्गलम्, आत्मनः, प्रतिबध्नाति, हि, श्रेयः, पूज्यपूजाव्यतिक्रमः ।

**अन्वयः**

तदवज्ञानात् आत्मनः ईप्सितं सार्गलं (भवति इति) विद्धि ।

पूज्यपूजाव्यतिक्रमः श्रेयः प्रतिबध्नाति ।

**अन्वयार्थः**

- तदवज्ञानात् = तस्याः (कामधेनोः) अनादरेण
- आत्मनः = स्वस्य (दिलीपस्य)
- ईप्सितम् = आप्तुम् इष्टम्
- सार्गलं = विघ्नसहितम्
- विद्धि - जानीहि ।
- हि - यतः
- पूज्यपूजाव्यतिक्रमः = पूजयितुं योग्यस्य अपूजनं
- श्रेयः = धर्मं, सुकृतम्, कल्याणम्, मङ्गलम्
- प्रतिबध्नाति = रुणद्धि

**आकाङ्क्षाक्रमः**

- विद्धि ।
    - कः विद्धि? त्वम् (दिलीपः)
    - किं विद्धि? सार्गलं (भवति इति)
        - किं सार्गलं (भवति) ? ईप्सितम्
            - कस्य ईप्सितम् ? आत्मनः

- किमर्थं सार्गलं (भवति) ? तदवज्ञानात्
    - प्रतिबध्नाति हि ।
        - कः प्रतिबध्नाति ? पूज्यपूजाव्यतिक्रमः
        - किं प्रतिबध्नाति ? श्रेयः

**भावार्थः**

दिलीपः स्वस्य सन्तानाभावस्य कारणं वसिष्ठमुनिम् अपृच्छत् । दीलीपः एकदा सुरभेः उपेक्षां कृतवान् । यः पूजयितुं योग्यस्य पूजां न करोति तस्य श्रेयसः प्राप्तौ विघ्नः भवति । अतः एव दिलीपेन अभीष्टं न प्राप्तम् इति वसिष्ठः वदति ।

**समासः**

- सार्गलम् = अर्गलेन सह वर्तमानम्
- पूज्यपूजाव्यतिक्रमः
    - पूजयितुं योग्याः = पूज्याः
    - पूज्यपूजा = पूज्यानां पूजा
    - पूज्यपूजाव्यतिक्रमः = पूज्यपूजायाः व्यतिक्रमः

80. इदानीं कामधेनुः सेवितुं न शक्या इति वसिष्ठः वदति -

**हविषे दीर्घसत्रस्य सा चेदानीं प्रचेतसः ।**

**भुजङ्गपिहितद्वारं पातालमधितिष्ठति ॥ ८० ॥**

**पदच्छेदः**

हविषे, दीर्घसत्रस्य, सा, च, इदानीम्, प्रचेतसः, भुजङ्गपिहितद्वारम्, पातालम्, अधितिष्ठति ।

**अन्वयार्थः**

- सा = कामधेनुः
- च = तथा

- इदानीम् = अधुना
- दीर्घसत्रस्य = यस्य देवस्य यागविशेषः चिरकालसाध्यः भवति तादृशस्य
- प्रचेतसः = वरुणस्य
- हविषे = दध्यादिहविरर्थम्
- भुजङ्गपिहितद्वारम् = सर्पैः अवरुद्धद्वारम्, ततः दुष्प्रवेशम्
- पातालम् = रसातलम्
- अधितिष्ठति = अध्यास्ते

**आकाङ्क्षाक्रमः**

- अधितिष्ठति
    - का अधितिष्ठति ? सा
    - कम् अधितिष्ठति ? पातालम्
        - कीदृशं पातालम् ? भुजङ्गपिहितद्वारम्
    - किमर्थम् अधितिष्ठति ? हविषे
        - कस्य हविषे ? प्रचेतसः
            - कीदृशस्य प्रचेतसः ? दीर्घसत्रस्य
        - कदा अधितिष्ठति ? इदानीम्

**अन्वयः**

सा च इदानीं दीर्घसत्रस्य प्रचेतसः हविषे भुजङ्गपिहितद्वारं पातालम् अधितिष्ठति ।

**भावार्थः**

सा च कामधेनुः इदानीं वरुणस्य चिरकालसाध्ययागार्थं दध्यादिहविःसंप्रदानाय पातालं गता अस्ति । पाताललोकस्य द्वारं सर्पैः अवरुद्धम् अस्ति । अतः भवान् तां सेवितुम् तत्र गन्तुं नार्हति ।

**समासः**

- दीर्घसत्रस्य = दीर्घं सत्रं यस्य सः, तस्य
- भुजङ्गपिहितद्वारम्
    - भुजङ्गपिहितम् = भुजङ्गेन पिहितम्
    - भुजङ्गपिहितद्वारम् = भुजङ्गपिहितं द्वारं यस्मिन् तत्

81. तर्हि परिहारस्य का गतिः इति आह –

**सुतां तदीयां सुरभेः कृत्वा प्रतिनिधिं शुचिः ।**
**आराधय सपत्नीकः प्रीता कामदुघा हि सा ॥ ८१ ॥**

**पदच्छेदः**

सुताम्, तदीयाम्, सुरभेः, कृत्वा, प्रतिनिधिम्, शुचिः, आराधय, सपत्नीकः, प्रीता, कामदुघा, हि, सा ।

**अन्वयार्थः**

- तदीयाम् = कामधेनोः इयम्
- सुताम् = दुहितरम्, पुत्रीम् (नन्दिनीम्)
- सुरभेः = कामधेनोः
- प्रतिनिधिम् = प्रतिच्छायाम्
- कृत्वा = विधाय
- शुचिः = शुद्धः
- सपत्नीकः सन् = भार्यया सुदक्षिणया सह भूत्वा
- आराधय = त्वं सेवस्व
- हि = यस्मात् कारणात्
- प्रीता सती = प्रसन्ना तुष्टा सती
- कामदुघा = मनोरथानां पूरयित्री (भवति)

**आकाङ्क्षाक्रमः**

- आराधय

- काम् ? (ताम्)
- कः ? (त्वम्)
    - कथम्भूतः ? सपत्नीकः (सन्)
    - पुनः कथम्भूतः ? शुचिः (सन्)
- किं कृत्वा ? प्रतिनिधिं कृत्वा
    - कां प्रतिनिधिं कृत्वा ? सुताम्
        - कस्याः सुताम् ? तदीयाम्
    - कस्याः प्रतिनिधिम् ? सुरभेः
    - हि कामदुघा (भवति)
        - का ? सा
        - कीदृशी सा ? प्रीता

**अन्वयः**

तदीयां सुतां सुरभेः प्रतिनिधिं कृत्वा शुचिः सपत्नीकः (सन्) (त्वं ताम्) आराधय। हि सा प्रीता (सती) कामदुघा (भवति)।

**भावार्थः**

वसिष्ठमुनिः दिलीपम् अवदत् - त्वं कामधेनोः दुहितरं नन्दिनीं कामधेनोः प्रतिच्छायां कृत्वा, शुचिः भूत्वा सुदक्षिणया सह तां आराधय। ततः नन्दिनी प्रसन्ना भूत्वा तव मनोरथं पूरयति।

**समासः वृत्तिः च**

- तदीयाम् = तस्याः इयम् तदीया, ताम्
    - तद् + इयम्, ताम्
- सपत्नीकः = पत्न्या सह वर्तमानः
- कामदुघा = कामान् दोग्धी

82. कामधेनुसुतया नन्दिन्या वनात् आगमनम् इत्यत्राह –

**इति वादिन एवास्य होतुराहुतिसाधनम् ।**
**अनिन्द्या नन्दिनी नाम धेनुराववृते वनात् ॥ ८२ ॥**

**पदच्छेदः**

इति, वादिनः, एव, अस्य, होतुः, आहुतिसाधनम्, अनिन्द्या, नन्दिनी, नाम, धेनुः, आववृते, वनात् ।

**आकाङ्क्षाक्रमः**

- आववृते ।
  - का आववृते ? धेनुः
    - का धेनुः ? नन्दिनी नाम
    - कीदृशी धेनुः ? अनिन्द्या
    - कथं भूता धेनुः ? आहुतिसाधनम् (आहुतिसाधनभूता)
      - कस्य आहुतिसाधनम् ? अस्य (मुनेः वसिष्ठस्य)
      - कीदृशस्य अस्य ? होतुः
      - पुनः कदाकीदृशस्य अस्य ? वादिनः एव
        - किमिति वादिनः ? इति (इत्थम्)
      - कुतः आववृते ? वनात्

**अन्वयः**

इति वादिनः एव होतुः अस्य आहुतिसाधनं नन्दिनी नाम अनिन्द्या धेनुः वनात् आववृते।

**अन्वयार्थः**

- इति = इत्थम् / एवम्
- वादिनः एव = कथयतः एव
- होतुः = हवनशीलस्य
- अस्य = मुनेः वसिष्ठस्य

- आहुतिसाधनं = हवनसामग्रीणां कारणम् / यज्ञे दध्याज्यादिसाधनभूता
- नन्दिनी = तन्नाम्नी कामधेनुसुता
- नाम = इति प्रसिद्धा
- अनिन्द्या = न निन्द्या = अगर्ह्या / प्रशंसनीया
- धेनुः = नवप्रसूता गौः
- वनात् = काननात्
- आववृते = आजगाम

**भावार्थः**

"इदानीं त्वं नन्दिनीं सपत्नीकः सन् सेवस्व, यतः सा प्रसन्ना भूत्वा मनोरथदात्री भवति" इति वसिष्ठः दिलीपम् आह। एवं कथयतः एव हवनशीलस्य वसिष्ठस्य यज्ञे दध्याज्यादीनां (पञ्चगव्यम् – क्षीरम्, दधि, घृतम्, गोमूत्रम्, गोमय़म् च ) हवनसामग्रीणां साधनभूता कामधेनुसुता नन्दिनी वनात् प्रत्यागता ।

'अव्याक्षेपो भविष्यन्त्याः कार्यसिद्धेः लक्षणम्' इति भावः ।

**समासः वृत्तिश्च**

- आहुतिसाधनम् – आहुतीनां साधनम् – षष्ठीतत्पुरुषः
- अनिन्द्या
  - निन्दितुं योग्या – निन्द्या
  - न निन्द्या – अनिन्द्या
- नन्दयति इति नन्दिनी

**विशेषविषयाः**

- आववृते
    - आ + “वृतु वर्तने”, लिट् ; लटि वर्तते
- होतु:
    - होतृ ऋकारान्तः (प्रथमाविभक्तौ होता), ष.वि., ए.व.
- वादिन:
    - वद् + “ताच्छील्ये” णिनिँ – अन्यानि उदाहरणानि – भाषिन् (मितभाषी), पाठिन् (एकपाठी), वादिन् (तत्त्ववादी), दर्शिन् (सूक्ष्मदर्शी)

कीदृशी सा धेनुः -

83. **ललाटोदयमाभुग्नं पल्लवस्निग्धपाटला ।**
**बिभ्रती श्वेतरोमाङ्कं सन्ध्येव शशिनं नवम् ॥ ८३ ॥**

**पदच्छेदः-**

ललाटोदयम्, आभुग्नम्, पल्लवस्निग्धपाटला, बिभ्रती, श्वेतरोमाङ्कम्, संध्या, इव , शशिनम्, नवम्

**आकाङ्क्षाक्रमः** –

- आववृते । (अध्याहृतम्)
    - का? धेनुः
        - कीदृशी धेनुः? पल्लवस्निग्धपाटला
        - किं बिभ्रती ? श्वेतरोमाङ्कम्
        - कीदृशं श्वेतरोमाङ्कम् ? ललाटोदयम्
        - पुनः कीदृशम् - आभुग्नम्
    - कथम् इव ? पल्लवस्निग्धपाटला संध्या नवं शशिनं बिभ्रती इव

**अन्वयः**

पल्लवस्निग्धपाटला (नन्दिनी) ललाटोदयम् आभुग्नम् श्वेतरोमाङ्कम् (बिभ्रती), नवं शशिनं बिभ्रती सन्ध्या इव वनात् आववृते ।

**अन्वयार्थः**

- पल्लवस्निग्धपाटला – किसलयम् इव मसृणा पाटलवर्णमयी च (धेनुः)
- ललाटोदयम् – मस्तके स्थितं
- आभुग्नम् – ईषद् वक्रम्
- श्वेतरोमाङ्कम् – धवल-रोमचिह्नं
- बिभ्रती – धारयन्ती
- नवम् – नूतनम्
- शशिनम् – चन्द्रमसम्
- संध्या – (बिभ्रती) अरूक्षा श्वेतरक्ता सन्ध्यावेला
- इव – यथा
- स्थिता वनात् आववृते

**व्याकरणविचाराः**

- स्निग्धा चासौ पाटला चा स्निग्धपाटला,
- पल्लववत् स्निग्धपाटला इति पल्लवस्निग्धपाटला
- ललाटे उदयः यस्य सः ललाटोदयः, तम् ललाटोदयम्
- आ ईषद् भुग्नः आभुग्नः
- श्वेतानि चा तानि रोमाणि श्वेतरोमाणि
- श्वेतरोमाणि एव अङ्कः श्वेतरोमाङ्कः

**अमरकोषः**

- स्निग्धम् – चिक्कणम्, मसृणम्
- पल्लवः – किसलयम्

भावार्थः

यथा वक्रं द्वितीयाचन्द्रं धारयन्ती नवपल्लवसदृशीं मसृणां श्वेतरक्तमयी च सन्ध्या शोभते तथैव ललाटे नवचन्द्राकारं श्वेतरोमाङ्कं धारयन्ती स्निग्धपाटलशोभिनी नन्दिनी वनात् प्रत्यागता ।

84. पुनरपि धेनुवर्णनप्रसङ्गेनाह-

**भुवं कोष्णेन कुण्डोध्नी मेध्येनावभृथादपि ।**
**प्रस्नवेनाभिवर्षन्ती वत्सालोकप्रवर्तिना ॥ ८४ ॥**

**पदच्छेदः-**

भुवम्, कोष्णेन, कुण्डोध्नी, मेध्येन, अवभृथात्, अपि, प्रस्नवेन, अभिवर्षन्ती, वत्सालोकप्रवर्तिना ।

**आकाङ्क्षाक्रमः** –

- आववृते । (अध्याहृतम्)
- का आववृते ? सा कामधेनुः
- कीदृशी धेनुः ? कुण्डोध्नी
- पुनः कीदृशी ? अभिवर्षन्ती
- काम् अभिवर्षन्ती - भुवम्
- केन भुवम् अभिवर्षन्ती - प्रस्नवेन
- कीदृषेण प्रस्नवेन ? कोष्णेन
    - पुनः कीदृषेण प्रस्नवेन ? वत्सालोकप्रवर्तिना प्रस्नवेन
    - पुनः कीदृषेण प्रस्नवेन ? मेध्येन

- कस्मात् (कस्य अपेक्षया) ? अवभृतात् अपि

**अन्वयः**

अवभृतात् अपि मेध्येन वत्सालोकप्रवर्तिना कोष्णेन प्रस्नवेन भुवं अभिवर्षन्ती कुण्डोध्नी (वनात् आववृते) ।

**अन्वयार्थः** –

- कोष्णेन – किञ्चिद् उष्णेन
- अवभृतात् अपि – -यज्ञाङ्गभूतात् अवभृतस्नानात् अपि
- मेध्येन – पवित्रेण
- वत्सालोकप्रवर्तिना – सुतस्य आलोकनात् प्रवहता
- प्रस्नवेन – क्षीराभिष्यन्दनेन
- भुवम् – भूमिम्
- अभिवर्षन्ती – सिञ्चन्ती
- कुण्डोध्नी – कुण्डतुल्यं ऊधः यस्याः सा
- वनात् आववृते

**व्याकरणविचाराः**

- ईषद् उष्णम् कोष्णम् , तेन कोष्णेन
- वत्सस्य आलोकः वत्सालोकः
- वत्सालोकेन प्रवर्तते इति वत्सालोकप्रवर्ति (प्रस्नवम्), तेन वत्सालोकप्रवर्तिना
- कुण्डं इव ऊधः यस्याः सा कुण्डोध्नी

अमरकोषः

civ. पिठरः स्थाल्युखा कुण्डम्
cv. पूतं पवित्रं मेध्यं

cvi. ऊधः , आपीनम्

cvii. दीक्षान्तो अवभृथो (यज्ञे)

**भावार्थः -**

वनात् आगच्छन्ती पीवराअपीनधारिणी नन्दिनी स्तन्यपानाय आतुरं तदीयां वत्सं आलोक्य स्वतः एव दुग्धनिष्यन्दनेन तपोवनभूमिम् आर्द्रां कुर्वती प्रविष्टा ।

85. नन्दिन्याः खुरोद्धूतरजसां पावनत्वं वर्ण्यते -

**रजकणैः खुरोद्धूतैः स्पृशद्भिर्गात्रमन्तिकात् ।**
**तीर्थाभिषेकजां शुद्धिमादधाना महीक्षितः ॥ ८५ ॥**

**पदच्छेदः**

रजकणैः, खुरोद्धूतैः,स्पृशद्भिः, गात्रम्, अन्तिकात्
तीर्थाभिषेकजाम्, शुद्धिम्, आदधाना, महीक्षितः।

**आकाङ्क्षाक्रमः**

- आववृते = आजगाम
  - कुत: आववृते ? वनात्
  - का आववृते ? नन्दिनी धेनु:
    - कीदृशी नन्दिनी ? आदधाना
      - काम् आदधाना ? शुद्धिम्
      - कै: शुद्धिम् आदधाना ? रजःकणैः
        - कीदृशै रजकणैः? खुरोद्धूतैः
      - पुनः कीदृशैः ? स्पृशद्भिः
      - किं स्पृशद्भिः ? गात्रम्
        - कस्य गात्रम् ? महीक्षितः(दिलीपस्य)
    - कुत्र (स्थितस्य) महीक्षितः ? अन्तिकात्

- कीदृशीं शुद्धिम् आदधाना ? तीर्थाभिषेकजाम्

**अन्वयः**

खुरोद्भूतैः रजःकणैः अन्तिकात् (वर्तमानस्य) महीक्षितः गात्रं स्पृशद्भिः तीर्थाभिषेकजां शुद्धिम् आदधाना 'नन्दिनी वनात् आववृते।'

**अन्वयार्थः**

- खुरोद्भूतैः= शफैः उत्थापितैः
- रजःकणैः= धूलीनां कणैः
- अन्तिकात् = समीपात्(वर्तमानस्य)
- महीक्षितः = दिलीपस्य, (भूमिम् क्षियते इति, महीक्षित् )
- गात्रम् = शरीरम्
- स्पृशद्भिः= स्पर्शं कुर्वद्भिः
- तीर्थाभिषेकजां = तीर्थाभिषेकेण उत्पन्नाम्
- शुद्धिम् = पवित्रताम् (तथा वायव्यस्नानेन शुद्धिम् )
- आदधाना = कुर्वाणा (इव )
- 'नन्दिनी वनात् आववृते' = धेनुः काननात् आजगाम ।

**भावार्थः**

यदा नन्दिनी धेनुः काननात् आजगाम तदा तस्याः शफैः धूलीनां लवाः उत्थापिताः। यथा तीर्थाभिषेकेण शुद्धिर्भवति तथैव समीपे वर्तमानस्य राज्ञः दिलीपस्य गात्रं स्पर्शन्तः ते धूलिकणाः तम् अपावयन् ।

**विशेषविषयाः**

- कणाः- 'लवलेशकणाणवः।'-अमरः।
- आग्नेयं भस्मना स्नानमवगाह्य तु वारुणम्। आपोहिष्ठेति च ब्राह्मं वायव्यं गोरजः स्मृतम्।-मनुस्मृति ।

- **आग्नेयम्** – After cleaning legs and hands, marking with Bhasma without mixing water all part of the body.
- **वारुणम्** – A good bath in river or our own house with pure water. (Since the deity of water is Varuna it is called so).
- **ब्राह्मम्** – With Vedic mantras sprinkling water in to legs, hands and heart.
- **वायव्यम्** – Having bath by way of sprinkling of **गोरजः ।**
- उद्धूतः = उद्+ धूञ् – कम्पने, क्त प्रत्ययः,धूतः, लटि धुनोति/ धुनुते
- आदधाना = आङ् + डुधाञ् – धारणपोषणयोः,शानच् स्त्री,लटि धत्ते /दधाति

**समासः वृत्तिश्च**

- खुरोद्धूतैः = खुरैः उद्धूताः, तैः, खुरोद्धूतैः ।
- रजःकणैः = रजसां कणाः, तैः,रजःकणैः ।
- तीर्थाभिषेकजाम्
  - तीर्थाभिषेकः = तीर्थस्य अभिषेकः
  - तीर्थाभिषेकजाम् = तीर्थाभिषेकात् जाता तीर्थाभिषेकजा, ताम् ।
- महीक्षितः = महीं क्षियते इति महीक्षित्, तस्य ।

========================================

86. कुलगुरोः पुनरपि आज्ञा दिलीपचक्रवर्तिनं प्रति -

**तां पुण्यदर्शनां दृष्ट्वा निमित्तज्ञस्तपोनिधिः ।**
**याज्यमाशंसितावन्ध्यप्रार्थनं पुनरब्रवीत् ॥ ८६ ॥**

**पदच्छेदः**

ताम्, पुण्यदर्शनाम्, दृष्ट्वा, निमित्तज्ञः, तपोनिधिः, याज्यम्, आशंसितावन्ध्यप्रार्थनम्, पुनः, अब्रवीत् ।

**आकाङ्क्षाक्रमः**

- पुनः अब्रवीत्
    - कः अब्रवीत् ? निमित्तज्ञः
        - कीदृशः निमित्तज्ञः ? तपोनिधिः
  - किं कृत्वा ? दृष्ट्वा
    - कां दृष्ट्वा ? ताम्

      कीदृशीं ताम् ? पुण्यदर्शनाम्
    - कं अब्रवीत् ? याज्यम्
        - कीदृशं याज्यम् ? अशंसितावन्ध्यप्रार्थनम्

**अन्वयः**

निमित्तज्ञः तपोनिधिः तां पुण्यदर्शनां दृष्ट्वा अशंसितावन्ध्यप्रार्थनं याज्यं पुनः अब्रवीत् ।

**अन्वयार्थः**

- निमित्तज्ञः = शकुनज्ञः
  - (नन्दिनीसेवाविषयस्य निवेदनसमये एव तस्याः आगमनं शुभसूचकम्)
- तपोनिधिः = तपश्चर्याणाम् आकरः
- पुण्यदर्शनाम् = यस्याः दर्शनमेव पवित्रं भवति, ताम्

- याज्यम् = यज्ञं कारयितुं योग्यः याज्यः, राजानं दिलीपम्
  - मुनिः वसिष्ठः याजकः तं दिलीपं याजयति
  - अतः राज्ञः याज्यत्वम्
- आशंसितावन्ध्यप्रार्थनम् = अविफलमनोरथं दिलीपम्

**भावार्थः**

शकुनमर्मविद् वसिष्ठमुनिः तत्रागतां नन्दिनीं दृष्ट्वा सफलप्रार्थनावन्तं दिलीपं पुनरुवाच ।

**समासाः वृत्तयश्च**

- निमित्तज्ञः = निमित्तानि जानाति इति
- तपोनिधिः = तपसां निधिः, षष्ठीतत्पुरुषः
- पुण्यदर्शनाम् = पुण्यं दर्शनं यस्याः सा, ताम्, बहुव्रीहिः
- अशंसितावन्ध्यप्रार्थनम्
  - अवन्ध्यम् = न वन्ध्यम्
  - अवन्ध्यप्रार्थनम् = अवन्ध्यं प्रार्थनं यस्य सः
  - अशंसिते अवन्ध्यप्रार्थनं यस्य सः

अन्यविषयः

- हरत्यघं संप्रति हेतुरेष्यतः शुभस्य पूर्वाचरितैः कृतं शुभैः ।
  शरीरभाजां भवदीयदर्शनं व्यनक्ति कालत्रितयेऽपि योग्यताम् ।।

शिशुपालवधम् १-२६

i.e., संप्रति अघं हरति एष्यतः शुभस्य हेतुः पूर्वाचरितैः शुभैः कृतं भवदीयदर्शनं शरीरभाजां कालत्रितयेऽपि योग्यतां व्यनक्ति ।

Sage Narada’s appearance is similarly described as sanctifying at the time, and indicating future good fortune.

87. राज्ञः अभीष्टसिद्धिः अचिरात् भविष्यति -

**अदूरवर्तिनीं सिद्धिं राजन्विगणयात्मनः ।**
**उपस्थितेयं कल्याणी नाम्नि कीर्तित एव यत् ॥ ८७ ॥**

**पदच्छेदः**

अदूरवर्तिनीम्, सिद्धिम्, राजन्, विगणय, आत्मनः, उपस्थिता, इयम्, कल्याणी, नाम्नि, कीर्तिते, एव, यत् ।

**अन्वयः**

हे राजन् ! आत्मनः सिद्धिम् अदूरवर्तिनीं विगणय, यद्, इयम्, कल्याणी, नाम्नि, कीर्तिते, (सति) एव, उपस्थिता ।

**अन्वयार्थः**

- हे राजन् !
- अदूरवर्तिनीम् = शीघ्रभाविनीम्
- सिद्धिम् = मनोरथपूर्तिम्
- विगणय = चिन्तय, विद्धि
    - वि + गण् लोट्., म.पु., ए.व.
- इयम् = नन्दिनीम्
- उपस्थिता = समीपे आगता
    - उप + स्था, कर्तरि क्तप्रत्ययान्त
- कल्याणी = मङ्गलमूर्तिः
- नाम्नी कीर्तिते एव = यदा तस्याः नाम उक्तं तस्मिन् क्षणे एव

**आकाङ्क्षाक्रमः**

- हे राजन् !
- विगणय
    - कः विगणय ? त्वम्

- किं विगणय ? सिद्धिम्
- कीदृशीं सिद्धिम् ? अदूरवर्तिनीम्
  - कस्य सिद्धिम् ? आत्मनः
- उपस्थिता
  - का उपस्थिता ? इयं नन्दिनी
    - कीदृशी नन्दिनी ? कल्याणी
  - कदा उपस्थिता ? नाम्नि कीर्तिते (सति) एव

**भावार्थः**

वसिष्ठमुनिः दिलीपं वदति - राज्ञः अभीष्टसिद्धिः अचिरात् एव भविष्यति । यदा वसिष्ठः नन्दिन्याः नाम उक्तवान् सा तत्क्षणे एव वनात् प्रत्यागता । एतत् वृत्तं शुभसूचकम् इति निमित्तज्ञः मुनिः जानन् तथा अवदत् ।

**समासाः वृत्तयश्च**

- अदूरवर्तिनीम् = अदूरे वर्तते इति अदूरवर्तिनी, ताम् ।

==========================================

88. पुत्रप्राप्त्यर्थं नन्दिनीपरिचर्यामुपदिशन्नाह -

**वन्यवृत्तिरिमां शश्वदात्मानुगमनेन गाम् ।**
**विद्यामभ्यसनेनेव प्रसादयितुमर्हसि ॥ ८८ ॥**

**पदच्छेदः**

वन्यवृत्तिः, 'सन्', इमाम्, शश्वत्, आत्मानुगमनेन, गाम्, विद्याम्, अभ्यसनेन, इव, प्रसादयितुम्, अर्हसि ।

**अन्वयक्रम**:

- अर्हसि
    - किं कर्तुम् ? प्रसादयितुम्
    - काम् ? इमां गाम् (नन्दिनीम्)
    - केन ? आत्मानुगमनेन
    - कियन्तं कालम् ? शश्वत्
    - कथम्भूत: सन् ? वन्यवृत्ति: 'सन्'
    - किं इव प्रसादयितुम् अर्हसि ? विद्याम् अभ्यासेन इव

**अन्वयः**

वन्यवृत्ति: 'सन्' इमां गां शश्वत् आत्मानुगमनेन, अभ्यसनेन विद्याम् इव प्रसादयितुम् अर्हसि ।

**अन्वयार्थः**

- वन्यवृत्ति: = कन्दमूलादिकं भुञ्जानः कुशशय्यायां शयानः च
- इमाम् = पुरोवर्तिनीम्
- गाम् = धेनुम्
- शश्वत् = आ प्रसादात्, अविच्छिन्नतया
- आत्मानुगमनेन = स्वस्य अनुसरणेन
- अभ्यसनेन = अभ्यासेन ( अनुष्ठातु: )
- विद्याम् = शास्त्रम्
- इव = यथा
- प्रसादयितुम् =प्रसन्नां कर्तुम्
- अर्हसि =योग्यो भवसि।

**भावार्थः**

यथा अनुष्ठातुः अभ्यासेन विद्या प्रसन्ना सती हृदयङ्गता भवति, तथैव यावत् इयं गौः प्रसीदति तावत् त्वम् वनकन्दमूलादीनां आहारं स्वीकुर्वन् अस्याः अनुसरणेन इमां सेवस्व ।

**समासः वृत्तिश्च**

- वन्यवृत्ति
  - वनेभवम्, वन्यम्
  - वन्यवृत्तिः यस्य असौ, वन्यवृत्तिः।
- आत्मानुगमनेन
  - आत्मनः अनुगमनम् - आत्मानुगमनम्, तेन, आत्मानुगमनेन।

==========================================

89. **गोः अनुसरणप्रकारम् वसिष्ठः वदति -**

**प्रस्थितायां प्रतिष्ठेथाः स्थितायां स्थितिमाचरेः ।**
**निषण्णायां निषीदास्यां पीताम्भसि पिबेरपः ॥ ८९ ॥**

**पदच्छेदः**

प्रस्थितायाम्, प्रतिष्ठेथाः, स्थितायाम्, स्थितिम्, आचरेः, निषण्णायाम्, निषीद, अस्याम्, पीताम्भसि, पिबेः, अपः।

**आकाङ्क्षाक्रमः**

- प्रतिष्ठेथाः = प्रस्थानं कुरु । प्र + स्था "ष्ठा गतिनिवृत्तौ" । प्रतिष्ठते । आत्मनेपदी. विधि., म.पु., ए.व. ।
  - कदा ? (अस्याम्) प्रस्थितायाम् (सत्यां)

- आचरेः = त्वम् आचर । आ + चर् “चरँ गतौ भक्षणे च”। विधि., म.पु., ए.व. ।
    - किम् आचरेः ? स्थितिम्
- कदा? (अस्यां) स्थितायाम् ।
- निषीद = त्वम् उपविश । नि + सद् “षद्लृँ विशरण-गति-अवसादनेषु” । लोट्., म.पु., ए.व. ।
    - कदा ? अस्यां निषण्णायाम् ।
- पिबेः = त्वं पिब । पा “पा पाने” । विधि.लि., म.पु., ए.व. ।
    - किं पिबेः ? अपः
    - कदा ? (अस्याम्) पीताम्भसि ।

**अन्वयः**

अस्याम् प्रस्थितायाम् प्रतिष्ठेथाः, स्थितायाम् स्थितिम् आचरेः, निषण्णायाम् निषीद, पीताम्भसि अपः पिबेः ।

**अन्वयार्थः**

- अस्याम् = एतस्यां नन्दिन्याम्
- प्रस्थितायाम् = प्रचलितायां सत्याम्
- प्रतिष्ठेथाः = त्वं प्रस्थानं कुरु
- स्थितायाम् = गमनात् निवृत्तायां सत्याम्
- स्थितिम् आचरेः = गमनात् निवृत्तिम् कुर्याः, तिष्ठ
- निषण्णायाम् = उपविष्टायां सत्याम्
- निषीद = उपविश
- पीताम्भसि = यदा सा जलं पिबति तदा एव
- अपः = जलं
- पिबेः = पानं कुरु ।

**भावार्थः**

अत्र धेनोः अनुकरणं केन प्रकारेण करणीयमिति मुनिः दिलीपम् उवाच । "यदा इयं नन्दिनी प्रचलति तदा त्वमपि प्रचल । यदा सा तिष्ठति तदा तिष्ठ । एवं यदा उपविशति तदा उपविश, यदा जलं पिबति तदैव त्वमपि जलं पिब । एवं छायावत् एनाम् अनुसर" इति । गां स्थित्यै गत्यै उपवेशनाय जलपानाय वा बाध्यां मा कुरु न चापि तां एतेभ्यः निवारय इत्यर्थः ।

**विशेषविषयाः**

- अपः = अप् । स्त्री.लि., द्वि.वि., नित्य.ब.व.
- अम्भसि = अम्भस् । न.लि., स.वि., ए.व.
- निषण्णा = नि + सद् "षद्लृँ विशरण-गति-अवसादनेषु" + क्तप्रत्ययः । स्त्री.लि. ।

**समासः वृत्तिश्च**

- पीताम्भसि = पीतम् अम्भः यया सा पीताम्भाः, तस्याम्

44. वधूरपि तपोवनावधि तामनुगच्छतु –

**वधूर्भक्तिमती चैनामर्चितामा तपोवनात् ।**
**प्रयता प्रातरन्वेतु सायं प्रत्युद्व्रजेदपि ॥ ९० ॥**

**पदच्छेदः**

वधूः, भक्तिमती, च, एनाम्, अर्चिताम्, आ, तपोवनात्, प्रयता, प्रातः, अन्वेतु, सायम्, प्रत्युद्व्रजेत्, अपि ।

**अन्वयः**

वधूः भक्तिमती प्रयता च (सती) अर्चिताम् एनां प्रातः आ तपोवनात् अन्वेतु सायम् अपि प्रत्युद्व्रजेत् ।

**आकाङ्क्षाक्रमः**

- अन्वेतु = अनुगच्छतु
  - का अन्वेतु ? वधूः
    - कीदृशी वधूः ? भक्तिमती
    - पुनः कीदृशी वधूः ? प्रयता
  - काम् अन्वेतु ? एनाम्
    - कीदृशीम् एनाम् अन्वेतु ? अर्चिताम्
  - कदा अन्वेतु ? प्रातः
  - कियत् पर्यन्तम् ? आ तपोवनात्
- प्रत्युद्व्रजेत् = प्रत्युद्गच्छतु
  - कदा प्रत्युद्व्रजेत्? सायम्

**अन्वयार्थः**

- वधूः = स्नुषा
- भक्तिमती = भक्त्युपेता (सती)
- प्रयता = पूता, पवित्रा (च सती)
- एनाम् = इमाम्
- अर्चिताम् = पूजिताम्
- आ तपोवनात् = तपोवनपर्यन्तम्
- प्रातः = प्रभाते
- अन्वेतु = अनुगच्छतु
- सायम् = दिनान्ते
- प्रति+उद्व्रजेत् = प्रत्युद्गच्छेत्

**तात्पर्यम्**

स्नुषा (कुलवधूः) सुदक्षिणा प्रातःकाले भक्त्युपेता शुचिः च सती नन्दिनीं सम्पूज्य तपोवनपर्यन्तं तां अनुगच्छतु । सायङ्काले ताम् तपोवनप्रवेशदेशात् सत्कारपूर्वकं तां आश्रमं प्रति आनयतु ।

**विशेषविषयाः**

- आ = "आङ् मर्यादायाम्" इति सूत्रम्
- अन्वेतु = अनु + इण् "इण् गतौ" । लोट् परस्मैपदी प्र.पु., ए.व.
- सायम् = अव्ययम्
- प्रत्युद्व्रजेत् = प्रति+उत्+व्रज् "व्रजँ गतौ" । विधिलिङ् प्र.पु., ए.व.

91. नन्दिनीपरिचर्यायाः अवधिं निर्दिशन्नाह –

**इत्याप्रसादादस्यास्त्वं परिचर्यापरो भव ।**
**अविघ्नमस्तु ते स्थेयाः पितेव धुरि पुत्रिणाम् ॥ ९१ ॥**

**पदच्छेदः**

इति, आप्रसादात्, अस्याः, त्वम्, परिचर्यापरः, भव, अविघ्नम्, अस्तु, ते, स्थेयाः, पिता , इव, धुरि, पुत्रिणाम्

**आकाङ्क्षाक्रमः**

- भव ।
  - कः? (त्वम्)
  - कीदृशः त्वम् ? परिचर्यापरः
  - कस्याः ? अस्याः (नन्दिन्याः)
  - कियन्तं कालं यावत् ? आ प्रसादात् (प्रसादपर्यन्तम् )
- अस्तु ।
  - किम् ? अविघ्नम्
  - कस्य ? ते (तव)

- स्थेयाः ।
    - कः स्थेयाः? त्वम्
    - कुत्र स्थेयाः ? धुरि
    - केषां धुरि ? पुत्रिणाम्
    - कः इव स्थेयाः ? (तव) पिता इव

**अन्वयः**

इति त्वम् आ प्रसादात् अस्याः परिचर्यापरः भव । ते अविघ्नम् अस्तु । पिता इव पुत्रिणाम् धुरि स्थेयाः ।

**अन्वयार्थः**

- इति – इत्थम्
- त्वम् – दिलीपः
- आ प्रसादात् – वरप्रदानपर्यन्तम्
- अस्याः – एतस्याः धेनोः
- परिचर्यापरः – शुश्रूषायां मग्नः
- भव – भवेः
- ते – तव
- अविघ्नम् – निर्विघ्नम्
- अस्तु – भवतु
- पिता – जनकः
- इव – यथा
- पुत्रिणाम् – पुत्रवतां
- धुरि – अग्रे
- स्थेयाः – तिष्ठेः

**व्याकरणविचाराः**

- प्रसादं अभिव्याप्य – आ प्रसादम्

- परिचर्यायाम् परः – परिचर्यापरः
- विघ्नानाम् अभावः – अविघ्नम्
- प्रशस्ताः पुत्राः सन्ति एषामिति - पुत्रिणः

**भावार्थः**

मुनिः दिलीपं नन्दिन्याः परिचर्याविधीन् उक्त्वा, तं उपदिशति - सुश्रूषया गाम् इमां तोषय । तव व्रताचरणं निर्बाधं प्रवर्तताम् । श्रेष्ठं पुत्रं प्राप्य तव जनकः इव पुत्रवत्सु उत्कृष्टं स्थानं भज ।

**विशेषविषयाः**

- आ प्रसादात् – प्रसादपर्यन्तम् (आङ् मर्यादाभिविध्योः।)
- अविघ्नम् – विघ्नस्य अभावः (अव्ययीभावः)
- स्थेयाः – तिष्ठेः(आशीरर्थे लिङ् )

**समासः वृत्तिश्च**

- आप्रसादम् – प्रसादम् अभिव्याप्य ।
- परिचर्यापरः – परिचर्यायां परः।
- अविघ्नम् – विघ्नानाम् अभावः।
- पुत्रिणाम् – प्रशस्ताः पुत्राः सन्ति एषामिति पुत्रिणः,
- तेषाम् , पुत्रिणाम् ।

=====================================
===

92. राज्ञः दिलीपस्य सप्रेम गुरोराज्ञाग्रहणमाह-

**तथेति प्रतिजग्राह प्रीतिमान्सपरिग्रहः।**
**आदेशं देशकालज्ञः शिष्यः शासितुरानतः ॥ ९२ ॥**

**पदच्छेदः**

तथा इति, प्रतिजग्राह, प्रीतिमान्, सपरिग्रहः,आदेशम्, देशकालज्ञः, शिष्यः, शासितुः, आनतः ।

**आकाङ्क्षाक्रमः**

- प्रतिजग्राह = स्वीचकार
  - कः ? शिष्यः
  - कीदृशः शिष्यः ? देशकालज्ञः
  - पुनः कीदृशः ? प्रीतिमान्
  - पुनः कीदृशः ? सपरिग्रहः
  - कम् प्रतिजग्राह ? आदेशम्
  - कस्य आदेशम् ? शासितुः (वसिष्ठस्य)
  - कथं भूत्वा प्रतिजग्राह ? आनतः (सन्)
  - केनप्रकारेण प्रतिजग्राह ? तथा (तेनैवप्रकारेण अस्तु ) इति ।

**अन्वयः**

देशकालज्ञः प्रीतिमान् शिष्यः सपरिग्रहः आनतः, (सन् ) शासितुः आदेशम् तथा इति प्रतिजग्राह ।

**अन्वयार्थः**

- देशकालज्ञः = देशकालौ वेत्ति / जानाति इति देशकालज्ञः
- प्रीतिमान् = प्रीतिः/ हर्षः अस्य अस्तिः इति
- शिष्यः = अन्तेवासी
- सपरिग्रहः = भार्यया सह वर्तते इति
- आनतः = अतिनम्रः (सन् )
- शासितुः = शासनकर्तुः (गुरोर्वसिष्ठस्य)
- आदेशम् = आज्ञाम्
- तथा = तेनैवप्रकारेण 'अस्तु'

- इति = इत्थम्
- प्रतिजग्राह = स्वीकृतवान्

**भावार्थः**

देशकालवित् अतः शासितुं य़ोग्यः शिष्यः राजा दिलीपः सभार्यः प्रसन्नः सन् गुरोर्वसिष्ठस्य आज्ञाम् अतिनम्रः भूत्वा तेनैवप्रकारेण 'अस्तु' इति स्वीकृतवान् ।

**विशेषविषयाः**

- देशकालज्ञः
- देशः – अग्निसन्निधिः च, कालः -अग्निहोत्रावसानसमयः च,
- देशकालौ, तौ जानाति इति देशकालज्ञः ।
- सपरिग्रहः- परिग्रहेण सह वर्तमानः
- 'पत्नीपरिजनादानमूलशापाः परिग्रहाः' इत्यमरः।

**समासः वृत्तिश्च**

- देशकालज्ञः – देशश्च कालश्च, देशकालौ ,
  - देशकालौ जानाति इति देशकालज्ञः ।
- प्रीतिमान् – प्रीतिः अस्य अस्ति इति प्रीतिमान् ।
- शिष्यः – शासितुं य़ोग्यः।
- सपरिग्रहः – परिग्रहेण सह वर्तते इति।

========================================

93. अथ रात्रिकालं विज्ञाय दिलीपशयनार्थं वसिष्ठानुशासनमाह -

**अथ प्रदोषे दोषज्ञः संवेशाय विशांपतिम् ।**

**सूनुः सूनृतवाक्स्रष्टुर्विससर्जोर्जितश्रियम् ॥ ९३ ॥**

**पदच्छेदः**

अथ, प्रदोषे, दोषज्ञः, संवेशाय, विशाम्, पतिम्, सूनुः, सूनृतवाक्, स्रष्टुः, विससर्ज, ऊर्जितश्रियम् ।

**आकाङ्क्षाक्रमः**

- अथ विससर्ज = आज्ञापितवान्
- कः विससर्ज ? स्रष्टुः सूनुः(मुनिः)
- कीदृशः स्रष्टुः सूनुः ?सूनृतवाक्
- पुनः कीदृशः ? दोषज्ञः
- कं विससर्ज ? विशां पतिम्(राजानम्)
- कीदृशं विशां पतिम् ? ऊर्जितश्रियम्
- किमर्थम् विससर्ज ? संवेशाय
- कदा विससर्ज ? प्रदोषे

**अन्वयः**

अथ प्रदोषे दोषज्ञः सूनृतवाक् स्रष्टुः सूनुः ऊर्जितश्रियम् विशां पतिं संवेशाय विससर्ज।

**अन्वयार्थः**

- अथ = नन्दिनीसेवाविधेः ज्ञापनात् परं
- प्रदोषे = रात्रौ
- दोषज्ञः = विद्वान्
- सूनृतवाक् = प्रियवचनः
- स्रष्टुः = सृष्टिं करोति इति स्रष्टा, ब्रह्मणः
- सूनुः = पुत्रः
- ऊर्जितश्रियम् = सम्पत्तिसम्पन्नम्
- विशाम् = मनुजानाम्
- पतिम् = स्वामिनम्

- संवेशाय = निद्रार्थम्
- विससर्ज = आज्ञापितवान्

**भावार्थः**

दिलीपः नन्दिन्याः शुश्रूषाविषये मुनेः निर्देशान् अतिनम्रः भूत्वा स्वीकृतवान्। अनन्तरं च रात्रौ विद्वान् सत्यप्रियवचनः वसिष्ठः सम्पत्तिसम्पन्नं राजानं निद्रार्थम् आज्ञापितवान्।

**विशेषविषयाः**

- दोषज्ञः -'विद्वान्विपश्चिद्दोषज्ञः' इत्यमरः।
- सूनृता – 'प्रियंसत्यं च सुनृतम्' इति हलायुधः।
- विशाम् – 'द्वौ विशौ वैश्यमनुजौ' इत्यमरः।
- संवेशः- 'स्यान्निद्रा शयनं स्वापः स्वप्नःसंवेश' इतयपि इत्यमरः।
- विससर्ज -वि उपसर्गपूर्व सृज-विसर्गे, लिट्, प्र.पु,ए.व (लटि, सृजति)

**समासः वृत्तिश्च**

- दोषज्ञः – दोषान् जानाति इति दोषज्ञः ।
- सूनृतवाक् – सूनृता वाक् यस्य सः,सूनृतवाक्
- स्रष्टुः – सृजति इति स्रष्टा,तस्य - स्रष्टुः
- ऊर्जितश्रियम् – ऊर्जिता श्रीः यस्य सः, ऊर्जितश्री, तम् ऊर्जितश्रियम्

========================================
====

94. महर्षेर्वसिष्ठस्य दिलीपाय मुनिजनार्हसामग्रीसम्पादनमाह-

**सत्यामपि तपःसिद्धौ नियमापेक्षयामुनिः ।**
**कल्पवित्कल्पयामास वन्यामेवास्य संविधाम् ॥ ९४ ॥**

**पदच्छेदः**

सत्याम्, अपि, तपःसिद्धौ, नियमापेक्षया, मुनिः, कल्पवित्, कल्पयामास, वन्याम्, एव, अस्य, संविधाम् ।

**आकाङ्क्षाक्रमः**

- कल्पयामास = रचयामास
- कः कल्पयामास ? मुनिः
- कीदृशः मुनिः ? कल्पवित्
- कां कल्पयामास ? संविधाम्
- कीदृशीं संविधाम् ? वन्याम् एव
- कस्य ? अस्य (दिलीपस्य)
- कस्यां सत्याम् अपि ? तपःसिद्धौ सत्याम् अपि
- केन हेतुना ? नियमापेक्षया

**अन्वयः**

कल्पवित् मुनिः तपःसिद्धौ सत्याम् अपि नियमापेक्षया अस्य वन्याम् एव संविधाम् कल्पयामास ।

**अन्वयार्थः**

- कल्पवित् = व्रतप्रयोगं जानाति इति
- मुनिः = वसिष्ठः
- तपःसिद्धौ = तपसा एव राजोचितशय्यासंपादनस्य सामर्थ्ये
- सत्याम् अपि = सति अपि
- नियमापेक्षया = व्रताचरणस्य दृष्ट्या
- अस्य = दिलीपस्य

- वन्याम् एव = अरण्ये भवा,ताम् एव
- संविधाम् = कुशादिशयनसामग्रीम्
- कल्पयामास = रचयामास।

**भावार्थः**

व्रतप्रयोगविदा मुनिना वसिष्ठेन तपःसिद्ध्या एव राजोचितशय्यासंपादनस्य सामर्थ्ये सत्यपि नन्दिनीशुश्रूषारूपव्रतकारणेन कुशादिभिरेव दिलीपस्य शय्या संपादिता ।

**विशेषविषयाः**

- कल्पयामास – क्लृपूँ सामर्थ्ये (कृपो रो लः), आ.प, लटि कल्पते, णिचि कल्पयति

**समासः वृत्तिश्च**

- कल्पवित् – कल्पं वेत्ति इति कल्पवित् ।
- तपःसिद्धौ- तपसः सिद्धिः, तपःसिद्धिः, तस्याम्, तपःसिद्धौ।
- नियमापेक्षया – नियमस्य अपेक्षा, तया, नियमापेक्षया ।
- वन्याम् -वने भवा, वन्या, ताम्, वन्याम् ।

======================================

95. वसिषठाज्ञया पर्णशालायां पत्न्या सह प्रसुप्तस्य दिलीपस्य ब्राह्ममुहूर्ते निद्रात्यागमाह-

**निर्दिष्टां कुलपतिना स पर्णशाला-**
**मध्यास्य प्रयतपरिग्रहद्वितीयः।**
**तच्छिष्याध्ययननिवेदितावसानां**

**संविष्टः कुशशयने निशां निनाय ॥ ९५ ॥**

**पदच्छेदः**

निर्दिष्टाम्, कुलपतिना, सः पर्णशालाम्, अध्यास्य, प्रयतपरिग्रहद्वितीयः, तच्छिष्याध्ययननिवेदितावसानाम्, संविष्टः, कुशशयने, निशाम्, निनाय ।

**आकाङ्क्षाक्रमः**

- निनाय = अनैषीत्
    - कां निनाय ? निशाम्
    - कीदृशीं निशाम् ? तच्छिष्याध्ययननिवेदितावसानाम्
    - क: निनाय ? सः दिलीपः
    - कीदृश: सः (दिलीपः) ? प्रयतपरिग्रहद्वितीयः
    - कथंभूतः सः ? संविष्टः (सन्)
    - कस्मिन् संविष्टः (सन्) ? कुशशयने
    - किं कृत्वा संविष्ट: ? अध्यास्य
    - काम् अध्यास्य ? पर्णशालाम्
    - कीदृशीं पर्णशालाम् ? निर्दिष्टाम्
    - केन निर्दिष्टाम् ? कुलपतिना

**अन्वयः**

प्रयतपरिग्रहद्वितीयः सः कुलपतिना निर्दिष्टाम् पर्णशालाम् अध्यास्य कुशशयने संविष्टः (सन्) तच्छिष्याध्ययननिवेदितावसानां निशां निनाय ।

**अन्वयार्थः**

- प्रयतपरिग्रहद्वितीयः - शुचिः च सपत्नीकः च सन्

- प्रयतः=पवित्रः,
    - परिग्रहः द्वितीयः = भार्या एव अपरः,यस्य सः, सुदक्षिणया सह
- सः = दिलीपः
- कुलपतिना = मुनिकुलेश्वरेण
- निर्दिष्टाम् = विज्ञापिताम्
- पर्णशालाम् = पर्णैः निर्मितं कुटीरम्
- अध्यास्य = अधिष्ठाय
- कुशशयने = कुशानां शयने
- संविष्टः (सन्)= सुप्तः(सन्)
- तच्छिष्याध्ययननिवेदितावसानाम् = वसिष्ठस्य शिष्याणां वेदाध्यायनेन सूचिता समाप्तिः, यस्याः सा, ताम्
- निशाम् = रात्रिम्
- निनाय =अनैषीत्

**भावार्थः**

राजा दिलीपः स्वपत्नया सुदक्षिणया सह कुलपतिना वसिष्ठेन सूचितां पर्णकुटीं प्रविश्य कुशास्तरणे सुप्तवान् । वसिष्ठस्य शिष्यैः कृतेन वेदघोषेण च रात्रिः अवसिता इति विज्ञाय सः प्रबुदधः।

**विशेषविषयाः**

- निनाय-णीञ्(नी)-प्रापणे,उ.प ,लिट्(प.प),प्र.पु,ए.व,लटि नयति/नयते
- 'निशान्ते न परिश्रान्तो ब्रह्माधीत्य पुनः स्वपेत्'। इति गौतमश्च।
- अत्र एतत् श्लोकस्य वृत्तं प्रहर्षिणी।
- म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम्॥

- मगणनगणौ जगणरगणौ, गुरुरेकश्च चेत् प्रहर्षिणी।त्रिभिः दशभिश्च यति भवति।

**समासः वृत्तिश्च**

- प्रयतपरिग्रहः – प्रयतः परिग्रहः यस्य सः, प्रयतपरिग्रहः।
- कुलपतिना – कुलस्य पतिः कुलपतिः, तेन कुलपतिना ।
- पर्णशालाम् – पर्णानां शाला पर्णशाला, ताम् पर्णशालाम् ।
- कुशशयने – कुशानां शयनं कुशशयनम्,तस्मिन् कुशशयने ।
- तच्छिष्याध्ययननिवेदितावसानाम् –
    - तस्य शिष्याः तच्छिष्याः,
    - तच्छिष्याणाम् अध्ययनम्, तच्छिष्याध्ययनम्
    - निवेदितम् अवसानम् = निवेदितावसानम्
    - तच्छिष्याध्ययनेन निवेदितावसानं यस्याः सा - तच्छिष्याध्ययननिवेदितावसाना, ताम् तच्छिष्याध्ययननिवेदितावसानाम् ।

=====================================

## References


- रघुवंशम्/प्रथमः सर्गः – विकिस्रोतः https://sa.wikisource.org/wiki/रघुवंशम्/प्रथमः_सर्गः
- http://www.giirvaani.in/giirvaani/rv/sargas/01htm
- http://raghuvamshateeka.blogspot.in/
- https://archive.org/details/raghuvamsaofkali00kliduoft


(Content from https://nivedita2015.wordpress.com/sanskrit-sessions/video-kalidasas-raghuvamsam-first-sarga-vidhya-ramesh/ as on 12-Nov-2018)

Link to the Playlist-

https://youtu.be/2dUYJvHWegI?list=PLTWf5ZhGT36322JDv8Qn7XvEX8fe9ZPEy